यस्त्वां हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।

जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां ॥१०

यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः । जोहवीमि ।

जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः । अग्ने । अमृतऽत्वम् । अश्याम् ॥१०

यः । त्वा । हृदा । कीरिणा । मन्यमानः । अमर्त्यम् । मर्त्यः । जोहवीमि ।

जातऽवेदः । यशः । अस्मासु । धेहि । प्रऽजाभिः । अग्ने । अमृतऽत्वम् । अश्याम् ॥१०

"यः "मर्त्यः मरणधर्माहम् "अमर्त्यम् अविनाशं "त्वा त्वां "कीरिणा स्तुत्यादिषु विक्षिप्तेन "हृदा हृदयेन युक्तः "मन्यमानः स्तुवन् "जोहवीमि अत्यर्थमाह्वयामि । यद्वा । स्तोतृवाचकेन कीरिणाशब्देन स्तुतिरुपलक्ष्यते । स्तुतियुक्तेन मनसा त्वां मन्यमानो जोहवीमि । हे "जातवेदः "यशः धनं प्रजां वा "अस्मासु "धेहि । "प्रजाभिः त्वद्दत्ताभिर्हे "अग्ने अहम् "अमृतत्वं संतत्यविच्छेदलक्षणम् "अश्यां प्राप्नुयाम् । प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' (तै. ब्रा. १. ५. ५. ६ ) इति हि श्रुतिः ॥

तस्यामेव पुत्रकामेष्टयां ' यस्मै त्वम्' इत्येषाग्नेः पुत्रवतोऽनुवाक्या। 'यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः ' ( आश्व. श्रौ. २. १० ) इति हि सूत्रितम् ॥

यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं ।

अश्विनं स पुत्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति ॥११

यस्मै । त्वम् । सुऽकृते । जातऽवेदः । ऊं इति । लोकम् । अग्ने । कृणवः । स्योनम् ।

अश्विनम् । सः । पुत्रिणम् । वीरऽवन्तम् । गोऽमन्तम् । रयिम् । नशते । स्वस्ति ॥११

यस्मै । त्वम् । सुऽकृते । जातऽवेदः । ऊं इति । लोकम् । अग्ने । कृणवः । स्योनम् ।

अश्विनम् । सः । पुत्रिणम् । वीरऽवन्तम् । गोऽमन्तम् । रयिम् । नशते । स्वस्ति ॥११

हे "जातवेदः "अग्ने "त्वं "यस्मै "सुकृते सुकर्मणे यजमानाय । "उ इति पूरणः । "लोकं "स्योनं सुखकरं "कृणवः अकरोः । यद्वा । लोकमालोकेन स्योनं कृणवः अनुग्रहेण कुर्वित्यर्थः । "सः यजमान: "अश्विनं बह्वश्वोपेतं "पुत्रिणं बहुपुत्रोपेतं "वीरवन्तं वीरैर्वीर्येण वा उपेतं "गोमन्तं गोभिर्युक्तं "रयिं धनं "नशते प्राप्नोति । "स्वस्ति अविनश्वरम् ॥ ॥ १९ ॥

# ऋग्वेदः सूक्तं ५.५



दे. आप्रीसूक्तं (१ इध्मः समिद्धोऽग्निर्वा, २ नराशंसः, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः । गायत्री।

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन ।

अग्नये जातवेदसे ॥१॥

नराशंसः सुषूदतीमं यज्ञमदाभ्यः ।

कविर्हि मधुहस्त्यः ॥२॥

ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् ।

सुखै रथेभिरूतये ॥३॥

ऊर्णम्रदा वि प्रथस्वाभ्यर्का अनूषत ।

भवा नः शुभ्र सातये ॥४॥

देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये ।

प्रप्र यज्ञं पृणीतन ॥५॥

सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा ।

दोषामुषासमीमहे ॥६॥

वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः ।

इमं नो यज्ञमा गतम् ॥७॥

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।

बर्हिः सीदन्त्वस्रिधः ॥८॥

शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना ।

यज्ञेयज्ञे न उदव ॥९॥

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि ।

तत्र हव्यानि गामय ॥१०॥

स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः ।

स्वाहा देवेभ्यो हविः ॥११॥

**सायणभाष्यम्**

'सुसमिद्धाय' इत्येकादशर्चं पञ्चमं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं गायत्रमिध्माद्युक्तदेवताकम् । आप्रमित्युक्तत्वात्तनूनपाद्वर्जितम् (अनु. म. १. सू. १३)। " सुसमिद्धायाप्रं गायत्रम्' इत्यनुक्रमणिका । अत्रीणामिदमाप्रीसूक्तम् । " समिद्धो अद्येति सर्वेषां यथर्षि वा ' ( आश्व. श्रौ. ३. २ ) इत्युक्तत्वात् ॥

सुसं॑मिद्धाय शो॒चिषे॑ घृ॒तं ती॒व्रं जु॑होतन ।

अ॒ग्नये॑ जा॒तवे॑दसे ॥१

सुऽसं॑मिद्धाय । शो॒चिषे॑ । घृ॒तम् । ती॒व्रम् । जु॒हो॒त॒न॒ ।

अ॒ग्नये॑ । जा॒तऽवे॑दसे ॥१

सुऽसमिद्धाय । शोचिषे । घृतम् । तीव्रम् । जुहोतन ।

अग्नये । जातऽवेदसे ॥१

"सुसमिद्धाय सुष्ठु समिद्धायैतन्नामकायाग्नये "शोचिषे दीप्तिमते "घृतम् आज्यं "तीव्रं प्रभूतं "जुहोतन हे ऋत्विजः "अग्नये अङ्गनादिगुणयुक्ताय "जातवेदसे जातधनाय ॥

नरा॒शंस॑ः सुषूदती॒मं य॒ज्ञमदा॑भ्यः ।

क॒विर्हि मधु॑हस्त्यः ॥२

नरा॒शंसः॑ । सु॒सू॒द॒ति॒ । इ॒मम् । य॒ज्ञम् । अदा॑भ्यः ।

क॒विः । हि । मधु॑ऽहस्त्यः ॥२

नराशंसः । सुसूदति । इमम् । यज्ञम् । अदाभ्यः ।

कविः । हि । मधुऽहस्त्यः ॥२

"नराशंसः नरैः शंसनीयोऽयमग्निः “इमं यज्ञम् इदं हविः वा 'सुषूदति सुष्ठु प्रेरयति । स देवः सुष्टु अदाभ्यः अहिंस्यः केनापि "कविः मेधावी "मधुहस्त्यः मधुरहस्त्यः ॥

ई॒ळि॒तो अ॑ग्न॒ आ व॒हेन्द्रं॑ चि॒त्रमि॒ह प्रि॒यम् ।

सु॒खै रथे॑भिरू॒तये॑ ॥३

ई॒ळि॒तः । अ॒ग्ने॒ । आ । व॒ह॒ । इन्द्र॑म् । चि॒त्रम् । इ॒ह । प्रि॒यम् ।

सु॒ऽखैः । रथे॑भिः । ऊ॒तये॑ ॥३

ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् ।

सुऽखैः । रथेभिः । ऊतये ॥३

हे "अग्ने "ईळितः स्तुतः सन् "आ "वहेन्द्रं "चित्रं चायनीयं “प्रियम् "इह अस्मिन् यज्ञे "सुखैः “रथेभिः रथैः “ऊतये अस्मद्रक्षणाय ॥

ऊर्णम्रदा वि प्रथस्वाभ्य१र्का अनूषत ।

भवा नः शुभ्र सातये ॥४

ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत ।

भव । नः । शुभ्र । सातये ॥४

ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत ।

भव । नः । शुभ्र । सातये ॥४

हे "ऊर्णम्रदाः ऊर्णाकम्बलवत् मृदु हे बर्हिः "वि "प्रथस्व प्रथय । "अर्काः स्तोतारः "अभि "अनूषत स्तुवन्ति । हे "शुभ्र दीप्त "सातये धनाय तद्दानाय वा "नः अस्माकं "भव ॥

देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये ।

प्रप्र यज्ञं पृणीतन ॥५

देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतये ।

प्रऽप्र । यज्ञम् । पृणीतन ॥५

देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतये ।

प्रऽप्र । यज्ञम् । पृणीतन ॥५

हे "द्वारः यज्ञस्य द्वाराभिमानिन्यो हे "देवीः देव्यः "वि "श्रयध्वं वियुक्ता भवत । "सुप्रायणाः शोभनगमनसाधनाः "नः अस्माकम् "ऊतये रक्षायै "यज्ञं यजमानं "प्रप्र "पृणीतन पूरयत कामैर्यज्ञमेव वा फलैः ॥ ॥ २० ॥

सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा ।

दोषामुषासमीमहे ॥६

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा ।

दो॒षाम् । उ॒षसं॑म् । ई॒म॒हे॒ ॥६

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा ।

दोषाम् । उषसम् । ईमहे ॥६

हे अह्नो रात्रेश्च अभिमानिदेव्यौ “सुप्रतीके सुरूपे शोभनाङ्गे वा “वयोवृधा अन्नस्य वर्धयित्र्यौ “यह्वी महत्यौ “ऋतस्य यज्ञस्योदकस्य वा "मातरा निर्मात्र्यौ तयोर्मध्ये प्रत्येकं "दोषां रात्रिदेवीम् “उषसम् अहर्देवीम् "ईमहे स्तुमः ॥

वात॑स्य॒ पत्म॑न्नीळि॒ता दैव्या॒ होता॑रा॒ मनु॑षः ।

इ॒मं नो॑ य॒ज्ञमा ग॑तम् ॥७

वात॑स्य । पत्म॑न् । ई॒ळि॒ता । दैव्या॑ । होता॑रा । मनु॑षः ।

इ॒मम् । न॒ः । य॒ज्ञम् । आ । ग॒त॒म् ॥७

वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः ।

इमम् । नः । यज्ञम् । आ । गतम् ॥७

“वातस्य “पत्मन् । लुप्तोपमैषा । वायुगमनसदृशगमनार्थम् “ईळिता अस्माभिः स्तुतौ । यद्वा । वातस्य पतनसाधनेऽन्तरिक्षे गच्छन्तौ "दैव्या देवादग्नेरादित्याच्च समुद्भूतौ "होतारा देवानामाह्वातारौ युवां "मनुषः मनुष्यस्य “इमं “नः अस्माकं "यज्ञमा "गतम् आगच्छतम् । नो मनुषो यज्ञमिति व्यधिकरणे षष्ठ्यौ । अस्माकं यजमानस्य यज्ञमित्यर्थः ॥

इळा॒ सर॑स्वती म॒ही ति॒स्रो दे॒वीर्म॑यो॒भुव॑ः ।

ब॒र्हिः सी॑दन्त्व॒स्रिध॑ः ॥८

इळा॑ । सर॑स्वती । म॒ही । ति॒स्रः । दे॒वीः । म॒य॒ःऽभुव॑ः ।

ब॒र्हिः । सी॒द॒न्तु॒ । अ॒स्रिध॑ः ॥८

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ।

बर्हिः । सीदन्तु । अस्रिधः ॥८

"इळा पृथिवी "सरस्वती । सर उदकम् । तस्मात् सरस्वान् वायुः । तस्य स्त्री सरस्वती । "मही महती भारती भरतस्यादित्यस्य पत्नी । अत्र यद्यप्येषा नोक्ता तथापि सर्वत्र सह दृष्टत्वात् त्रिसंख्याश्रवणाच्च सा गृह्यते । अथवैता: क्षित्यन्तरिक्षद्युस्थाना वाग्देव्यः । एताः "मयोभुवः सुखस्य भावयित्र्यः "अस्रिधः अहिंसिकाः सत्यः “बर्हिः बर्हिषि "सीदन्तु उपविशन्तु ॥

शि॒वस्त्वं॑ष्टरि॒हा ग॑हि वि॒भुः पोषं॑ उ॒त त्मना॑ ।

य॒ज्ञेयं॑ज्ञे न॒ उदं॑व ॥९

शि॒वः । त्व॒ष्ट॒रि॒ति॑ । इ॒ह । आ । ग॒हि॒ । वि॒ऽभुः । पोषे॑ । उ॒त । त्मना॑ ।

य॒ज्ञेऽयं॑ज्ञे । न॒ः । उत् । अ॒व॒ ॥९

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना ।

यज्ञेऽयज्ञे । नः । उत् । अव ॥९

हे "त्वष्टः देव "शिवः सुखकरः सन् "इहा "गहि अस्मद्यज्ञमागच्छ । “विभुः व्याप्तस्त्वं "पोषे पोषकरणे । 'उत आगत्य च “त्मना आत्मना स्वयमेव "यज्ञेयज्ञे सर्वेषु यज्ञेषु "नः अस्मान् "उदव उत्कृष्टं रक्ष ।

अग्निहोत्रे उत्तराहुतिस्कन्दने ‘ यत्र वेत्थ' इत्यनया समिधमादध्यात् । सूत्रितं च -- यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने ' ( आश्व. श्रौ. ३. ११ ) इति ॥

यत्र॒ वेत्थ॑ वनस्पते दे॒वानां॒ गुह्या॒ नामा॑नि ।

तत्र॑ ह॒व्यानि॑ गामय ॥१०

यत्र॑ । वेत्थ॑ । व॒न॒स्प॒ते॒ । दे॒वाना॑म् । गुह्या॑ । नामा॑नि ।

तत्र॑ । ह॒व्यानि॑ । ग॒म॒य॒ ॥१०

यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि ।

तत्र । हव्यानि । गमय ॥१०

हे "वनस्पते यूपाभिमानिदेव "यत्र यस्मिन् स्थाने "वेत्थ "देवानां "गुह्या गुह्यानि "नामानि नामकानि रूपाणि "तत्र "हव्यानि "गमय प्रापय ॥

स्वाहा॑ दे॒वेभ्यो॑ ह॒विः ॥११

यत्र॑ । वेत्थ॑ । व॒न॒स्प॒ते॒ । दे॒वाना॑म् । गुह्या॑ । नामा॑नि ।

तत्र॑ । ह॒व्यानि॑ । ग॒म॒य॒ ॥११

यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि ।

तत्र । हव्यानि । गमय ॥११

अग्न्यादिविश्वेदेवाः। तेभ्यः "देवेभ्य इदं "हविः "स्वाहा करोमीति शेषः । स्वाहुतं करोमीत्यर्थः । एवं स्वाहाकृतेः स्तुतिः ॥ ॥ २१ ॥

**टिप्पणी**

According to Sayana (RV I.13), there are 12 āprī sukta. Of the ten āprī sukta, Ṛgveda commented by Gargya Narayana, RV I.13 and I.142 invoke Narāśaṁsa and Tanūnapāt manifestations of Agni. RV I.188, III.4, IX.5 and X.110 invoke only Tanūnapāt manifestation. RV II.3, V.5, VII.2 and X.70 invoke only Narāśaṁsa manifestation.

इध्मः
ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते ।
पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।। वराहपुराणम् १८.२६ ।।
ध्मा शब्दस्य विनियोजनं प्रायः अयसः ध्मानाय एव भवति। किन्तु अत्र प्रपूरणे अस्ति। यथा उल्लिखितमस्ति, इध्मस्य उन्नतं रूपं समित् अस्ति। समित् अर्थात् समिति, सममिति। अस्मिन् जगते सममितेः ह्रासं अस्ति, येन कारणेन सममितेः प्रपूरणाय वयं भोजनं कुर्वामः। सममितेः आधुनिकं व्याख्या श्री गोवान (http://johnagowan.org/appendix1.html) कृतमस्ति। विष्णु पुराणस्य १.८.१९ कथनमस्ति - लक्ष्मी इध्मा, विष्णुः कुशः।
कुशोपरि टिप्पणी (https://vedastudy.yolasite.com/kusha1.php)

५.५.२ नराशंसः सुषूदति इति
नाराशंस- प्रयाजेषु द्वितीया आप्रीदेवता नाराशंसः (अग्निः) इत्युच्यते । ......इतरेषां तु तनूनपात् द्वितीयः प्रयाज इति विशेषोऽवधेयः (तु०मी०को० पृ० २७।७७ । द्र० आप्री-, प्रयाजः।

नाराशंसचमस– सोमयज्ञेषु

१. आज्यशस्त्रे ग्रहभक्षानन्तरं ये चमसास्ते नाराशंसाख्याः, तान् भक्षितप्रतिभक्षितान् आप्याययन्ति मरुत्वतीये च। भक्षिताप्यायितानां सादितानां चमसानां नाराशंसशब्दः संज्ञा। अत उक्तमाचार्येण आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्तीति (आ० श्रौ० ५।६।३०) भक्षितेषु चमसेषु पुनः पूरणम् आप्यायनम् (तु०- ऐ० ब्रा० सा० २।२४)

२. आज्यादिषु यथोद्दिष्टेषु ये वषट्कारेण चमसा हविर्धानस्था एव कम्प्यन्ते ते नाराशंससंज्ञाः (शां० श्रौ० भा० ७।५। २१-२२) ।

३. ये असर्वभक्षाः (सशेषाः) चमसाः ते नाराशंसाश्चमसा उच्यन्ते सर्वभक्षास्तु चमसा एव। तेन चमसाः सर्वभक्षा असर्वभक्षाश्चेति द्विविधाः भवन्ति । नाराशंसा अनाराशंसाश्चोच्यन्ते । अनाराशंसेषु चमसेषु सशस्त्रग्रहस्य 'उक्थशा यज सोमानाम्' इति प्रैषो भवति (तु०- का० श्रौ० ९।१४।१-२ विद्याधरः)। इति विशेषोऽवधेयः। द्र० चमसाप्यायन- । तदुक्तं ते(असर्वभक्षाः) नाराशंसा आ वैश्वदेवात्' (का० श्रौ० ९।१२।८)।

४. हुतशिष्टा भक्षिता आप्यायिताश्चमसा उच्यन्ते । तत्र प्रातःसवनमाध्यन्दिनसवने द्विनाराशंसे तृतीयसवनमेकनाराशंसमिति विशेषोऽवधेयः। तु० - तां० ब्रा० सा० १७।११।२) द्र० नराशंसपङ्क्ति - ।

५. सवनमुखेषु अग्नौ समुद्धृताः पुनर्भक्षिताः पुनर्वसतीवरीभिः 'आप्यायस्व इति मन्त्रेण पूरिताः चमसा नाराशंसाः (तां० ब्रा० सा० ९।९।५) ।

६. नरामनुष्या ऋभुप्रमुखाः शस्यन्ते यस्मिन् सवनविशेषे स भक्षिताप्यायितः चमसः नराशंसः। तत्र 'देवैः पीतस्य ऊमपितृभिश्च भक्षितस्य मतिविदस्ते भक्षयामि' इत्यनेन मन्त्रेण प्रातः सवनसंबन्धी भक्षः कर्तव्यः । इतरयोस्तु सवनयोः तस्मिन् मन्त्रे 'ऊमैः' इत्यस्य पदस्य स्थाने 'ऊर्वैः' 'काव्यैः' इति पदद्वयं क्रमेण पठनीयमिति विशेषोऽवधेयः (तु०- ऐ० ब्रा० सा० ७।३४)।

नाराशंसपङ्क्ति - 'द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनम् इति पञ्चवारं प्रयुक्ता नाराशंसचमसाः पञ्चसंख्योपेतत्वात् नाराशंसानां पङ्क्तिरित्युच्यते। (तु०- ऐ० ब्रा० सा० २।२४)।

नाराशंसप्रयाजप्रैष- अध्वर्युणा 'प्रेष्य' इत्युक्ते आह–'होता यक्षन्नाराशंसं शस्त्रं नृः प्रणेद्यम् । गोभिर्वपावान् स्यादवीरैः शक्तीवान् रथैः प्रथमाया हिरण्मयैश्चन्द्रीवेत्वाज्यस्य होतर्यज' इति । अयं वैकल्पिकः द्वितीय प्रयाजस्य नाराशंसस्य प्रयाजप्रैष उच्यते। द्र० आप्रीप्रैष-श्रौ०प०नि० पृ० १४३ ।

नाराशंसवत्प्रयाज– (क) दर्शपूर्णमासेष्टौ पञ्च प्रयाजाः भवन्ति । ते च समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति', इति । ये३यजामहे' इत्यागुरादयो यजूरूपा वषट्कारान्ता भवन्ति याज्यात्वात् । तेषामन्ते वषट्कारात्पूर्वं 'वेतु० वीतां, व्यन्तु' इति पदत्रयमध्ये वचनविवक्षया अन्यतमं पदं याज्यान्तत्व प्रयुक्तप्लुतियुक्तं भवति । पञ्चसु चतुर्णां प्रयाजानां वसन्तग्रीष्मवर्षाशरदश्चतस्रो देवताः पञ्चमस्य तु हेमन्तशिशिरौ समस्तौ देवता तेषु वैकल्पिकः द्वितीयः प्रयाजः यजमानस्य गोत्रेण वासिष्ठत्वे शौनकत्वे आत्रेयत्वे वाध्य् यश्वत्वे आदौ नराशंसपदघटितः, अन्येषां तु तनूनपाद् घटितादिर्भवति.....

नाराशंससादन- होतृचमसप्रचारे त्रिषु सवनेषु चमसाध्वर्यवः होतृचमसादीन् दक्षिणहविर्धानस्य पश्चात् अक्षस्याप्यधः

सादयन्तीति । इदं नाराशंससादनमुच्यते । द्र० नाराशंसचमस–, श्रौ०प०नि० पृ० २८७ ।
(श्रौतयज्ञप्रक्रिया-पदार्थानुक्रमकोषः। प्रणेता - प. पीताम्बरदत्तशास्त्री। राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, २००५ई.)

**मण्डल ५**

| | | | | |
|---|---|---|---|---|
| सूक्तं ५.१ | सूक्तं ५.२१ | सूक्तं ५.४१ | सूक्तं ५.६१ | सूक्तं ५.८१ |
| सूक्तं ५.२ | सूक्तं ५.२२ | सूक्तं ५.४२ | सूक्तं ५.६२ | सूक्तं ५.८२ |
| सूक्तं ५.३ | सूक्तं ५.२३ | सूक्तं ५.४३ | सूक्तं ५.६३ | सूक्तं ५.८३ |
| सूक्तं ५.४ | सूक्तं ५.२४ | सूक्तं ५.४४ | सूक्तं ५.६४ | सूक्तं ५.८४ |
| सूक्तं ५.५ | सूक्तं ५.२५ | सूक्तं ५.४५ | सूक्तं ५.६५ | सूक्तं ५.८५ |
| सूक्तं ५.६ | सूक्तं ५.२६ | सूक्तं ५.४६ | सूक्तं ५.६६ | सूक्तं ५.८६ |
| सूक्तं ५.७ | सूक्तं ५.२७ | सूक्तं ५.४७ | सूक्तं ५.६७ | सूक्तं ५.८७ |
| सूक्तं ५.८ | सूक्तं ५.२८ | सूक्तं ५.४८ | सूक्तं ५.६८ | |
| सूक्तं ५.९ | सूक्तं ५.२९ | सूक्तं ५.४९ | सूक्तं ५.६९ | |
| सूक्तं ५.१० | सूक्तं ५.३० | सूक्तं ५.५० | सूक्तं ५.७० | |
| सूक्तं ५.११ | सूक्तं ५.३१ | सूक्तं ५.५१ | सूक्तं ५.७१ | |
| सूक्तं ५.१२ | सूक्तं ५.३२ | सूक्तं ५.५२ | सूक्तं ५.७२ | |
| सूक्तं ५.१३ | सूक्तं ५.३३ | सूक्तं ५.५३ | सूक्तं ५.७३ | |
| सूक्तं ५.१४ | सूक्तं ५.३४ | सूक्तं ५.५४ | सूक्तं ५.७४ | |
| सूक्तं ५.१५ | सूक्तं ५.३५ | सूक्तं ५.५५ | सूक्तं ५.७५ | |
| सूक्तं ५.१६ | सूक्तं ५.३६ | सूक्तं ५.५६ | सूक्तं ५.७६ | |
| सूक्तं ५.१७ | सूक्तं ५.३७ | सूक्तं ५.५७ | सूक्तं ५.७७ | |
| सूक्तं ५.१८ | सूक्तं ५.३८ | सूक्तं ५.५८ | सूक्तं ५.७८ | |
| सूक्तं ५.१९ | सूक्तं ५.३९ | सूक्तं ५.५९ | सूक्तं ५.७९ | |
| सूक्तं ५.२० | सूक्तं ५.४० | सूक्तं ५.६० | सूक्तं ५.८० | |

# ऋग्वेदः सूक्तं ५.६

ऋग्वेदः - मण्डल ५
← सूक्तं ५.५ सूक्तं ५.६ सूक्तं ५.७ →
वसुश्रुत आत्रेयः

दे. अग्निः। पङ्क्तिः।

---

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।

अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥१॥

सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।

समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥२॥

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।

अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥३॥

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।

यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥४॥

आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।

सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥५॥

प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।

ते हिन्विरे त इन्विरे त इषण्यन्त्यानुषगिषं स्तोतृभ्य आ भर ॥६॥

तव त्ये अग्ने अर्चयो महि व्राधन्त वाजिनः ।

ये पत्वभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भर ॥७॥

नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः ।

ते स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भर ॥८॥

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।

उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥९॥

एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।

दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥१०॥

**सायणभाष्यम्**

अग्निं तं मन्ये ' इति दशर्चं षष्ठं सूक्तं वसुश्रुतस्यार्षमाग्नेयं पाङ्क्तम् । 'अग्निं तं दश पाङ्क्तम्' इत्यनुक्रमणिका । प्रातरनुवाके आग्नेये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'अग्निं तं मन्य इति पाङ्क्तम्' ( आश्व. श्रौ. ४. १३ ) इति हि सूत्रितम् । आश्वमेधिके मध्यमेऽहनीदमेव आज्यशस्त्रम् । सूत्रितं च - अग्निं तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात्' ( आश्व. श्रौ. १०.१०) इति । आद्य आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्यानुरूपस्तृचः । सूत्रितं च - अग्निं तं मन्ये यो वसुराग्ने स्थूरं रयिं भर ' (आश्व. श्रौ. ७. ८) इति ॥

अ॒ग्निं तं मं॑न्ये॒ यो वसु॒रस्तं॒ यं यन्तिं॑ धे॒नवः॑ ।

अस्त॒मर्वं॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥१

अ॒ग्निम् । तम् । म॒न्ये॒ । यः । वसुः॑ । अस्त॑म् । यम् । यन्ति॑ । धे॒नवः॑ ।

अस्त॑म् । अर्व॑न्तः । आ॒शवः॑ । अस्त॑म् । नित्या॑सः । वा॒जिनः॑ । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥१

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति । धेनवः ।

अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः । वाजिनः । इषम् । स्तोतृऽभ्यः । आ । भर ॥१

“तम् “अग्निं “मन्ये स्तौमि । “यः अग्निः "वसुः वासकः । “यम् “अस्तं सर्वेषां गृहवदाश्रयभूतं “धेनवः "यन्ति गच्छन्ति प्रीणयितुम् । “अस्तम् उक्तलक्षणम् “अर्वन्तः अरणवन्तोऽश्वाः । “आशवः शीघ्रगामिनो यन्ति । तथा “नित्यासः नित्यप्रवृत्तयः “वाजिनः हविर्लक्षणान्नवन्तः यजमाना यम् “अस्तं यन्ति तं मन्ये । “इषम् अन्नं “स्तोतृभ्यः अस्मभ्यम् “आ “भर अग्ने ॥

सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नव॑ः ।

समर्व॑न्तो रघु॒द्रुव॒ः सं सु॑जा॒तास॑ः सू॒रय॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥२

सः । अ॒ग्निः । यः । वसुः॑ । गृ॒णे । सम् । यम् । आ॒ऽयन्ति॑ । धे॒नवः॑ ।

सम् । अर्व॑न्तः । र॒घु॒ऽद्रुवः॑ । सम् । सु॒ऽजा॒तासः॑ । सू॒रयः॑ । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥२

सः । अग्निः । यः । वसुः । गृणे । सम् । यम् । आऽयन्ति । धेनवः ।

सम् । अर्वन्तः । रघुऽद्रुवः । सम् । सुऽजातासः । सूरयः । इषम् । स्तोतृऽभ्यः । आ । भर ॥२

“सः “अग्निः स खल्वग्निः “यो "वसुः वासकः “गृणे स्तूयते । “यं “धेनवः “सम् “आयन्ति होमार्थम् । “अर्वन्तः अश्वाः “रघुद्रुवः लघुगमनाः “सम् आयन्ति । "सुजातासः “सूरयः मेधाविनश्च “सम् आयन्ति स खल्वग्निरिति ।।

अ॒ग्निर्हि वा॒जिनं॑ वि॒शे ददा॑ति वि॒श्वच॑र्षणिः ।

अ॒ग्नी रा॒ये स्वा॒भुवं॒ स प्री॒तो या॑ति॒ वार्य॒मिषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥३

अ॒ग्निः । हि । वा॒जिनं॑म् । वि॒शे । ददा॑ति । वि॒श्वऽच॑र्षणिः ।

अ॒ग्निः । रा॒ये । सु॒ऽआ॒भुवं॑म् । सः । प्री॒तः । या॒ति॒ । वार्यं॑म् । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥३

अग्निः । हि । वाजिनम् । विशे । ददाति । विश्वऽचर्षणिः ।

अग्निः । राये । सुऽआभुवम् । सः । प्रीतः । याति । वार्यम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥३

“अग्निर्हि अयमग्निः खलु “विशे यजमानाय “वाजिनम् अन्नवन्तं पुत्रमश्वमन्नं वा “ददाति । “विश्वचर्षणिः । विश्वे चर्षणयो मनुष्या रक्षणीया अर्चका वा यस्य स तथोक्तः । यद्वा । पश्यतिकर्मैतत् । सर्वस्य द्रष्टा "अग्निः “राये धनार्थिने । अथवा द्वितीयार्थे चतुर्थी । धनं “स्वाभुवं सुष्ठु सर्वत्र व्याप्तं “वार्यं सर्वैर्वरणीयं “प्रीतः सन् "याति यमयति । दातुं वा गच्छति । इषमित्यादि गतम् ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोत्रियतृचस्य ' अ ते अग्न इधीमहि ' इत्यादिके प्रथमाद्वितीये । सूत्रितं च भवति - आ ते अग्ने इधीमह्युभे सुश्चन्द्र सर्पिष इति द्वे एका च ' ( आश्व. श्रौ. ७. ८) इति ॥

आ तेँ अग्न इधीमहि द्युमन्तँ देवा॒जरं॑म् ।

यद्ध॒ स्या ते॒ पनीं॑यसी स॒मिद्दी॒दयं॑ति॒ द्यवीषँ स्तो॒तृभ्य॒ आ भं॑र ॥४

आ । ते॒ । अ॒ग्ने॒ । इ॒धी॒म॒हि॒ । द्यु॒ऽमन्तं॑म् । दे॒व॒ । अ॒जरं॑म् ।

यत् । ह॒ । स्या । ते॒ । पनीं॑यसी । स॒म्ऽइत् । दी॒दयं॑ति । द्यविं । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥४

आ । ते । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम् ।

यत् । ह । स्या । ते । पनीयसी । सम्ऽइत् । दीदयति । द्यवि । इषम् । स्तोतृऽभ्यः । आ । भर ॥४

हे अग्ने “देव “द्युमन्तं दीप्तिमन्तम् “अजरम् अजीर्णं “ते त्वाम् “आ सर्वतः “इधीमहि दीपयामः । “यद्ध खलु “स्या सा “ते तव “पनीयसी स्तुत्या “समित् दीप्तिः "दीदयति दीप्यते द्यवि द्युलोके ॥

आ तेँ अग्न ऋ॒चा ह॒विः शु॒क्रस्य॑ शोचिषस्पते ।

सुश्चं॑न्द्र॒ दस्म॒ विश्पं॑ते॒ हव्यं॑वा॒ट् तुभ्यँ हूयत॒ इषँ स्तो॒तृभ्य॒ आ भं॑र ॥५

आ । ते॒ । अ॒ग्ने॒ । ऋ॒चा । ह॒विः । शु॒क्रस्य॑ । शो॒चि॒षः॒ । प॒ते॒ ।

सु॒ऽचं॑न्द्र । दस्मं॑ । विश्पं॑ते । हव्यं॑ऽवाट् । तुभ्यं॑म् । हू॒य॒ते॒ । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥५

आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।

सुऽचन्द्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यम् । हूयते । इषम् । स्तोतृऽभ्यः । आ । भर ॥५

हे "शोचिषः दीप्तेः "पते स्वामिन् “अग्ने "शुक्रस्य दीप्तस्य “ते तुभ्यम् “ऋचा मन्त्रेण सह "हविः हूयते । हे "सुश्चन्द्र सुष्ठ्वाह्लादक शोभनहिरण्य वा हे “दस्म शत्रूणामुपक्षपयितः “विश्पते विशां प्रजानां पालक “हव्यवाट् हविषो वोढः । इषमिति गतम् ॥ ॥ २२ ॥

प्रो त्ये अ॒ग्नयो॒ऽग्निषु॒ विश्वँ पुष्यन्ति॒ वार्यँम् ।

ते हिंन्विरे॒ त इं॑न्विरे॒ त इं॑षण्यन्त्यानु॒षगिषँ स्तो॒तृभ्य॒ आ भं॑र ॥६

प्रो इति॑ । त्ये । अ॒ग्नयः॑ । अ॒ग्निषु॑ । विश्व॑म् । पु॒ष्य॒न्ति॒ । वार्य॑म् ।

ते । हि॒न्वि॒रे॒ । ते । इ॒न्वि॒रे॒ । ते । इ॒ष॒ण्य॒न्ति॒ । आ॒नु॒षक् । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥६

प्रो इति । त्ये । अग्नयः । अग्निषु । विश्वम् । पुष्यन्ति । वार्यम् ।

ते । हिन्विरे । ते । इन्विरे । ते । इषण्यन्ति । आनुषक् । इषम् । स्तोतृऽभ्यः । आ । भर ॥६

“प्रो प्रैव “पुष्यन्ति “त्ये ते “अग्नयः धिष्ण्या “अग्निषु गार्हपत्यादिषु । यद्वा । लौकिका अग्नयः तेजःपदार्थोऽग्निषु वैदिकेषु “विश्वं सर्वं “वार्यं वरणीयमपेक्षितं धनं पुष्यन्ति । “ते अग्नयः “हिन्विरे प्रीणयन्ति । “इन्विरे व्याप्नुवन्ति च । “ते “इषण्यन्ति अन्नमिच्छन्ति । “आनुषक् सर्वत्रानुषक्तम् । तत्राग्निसामान्याभिप्रायेणैकवचनम् ॥

तव॒ त्ये अ॑ग्ने अ॒र्चयो॒ महि॑ व्राधन्त वा॒जिनः॑ ।

ये पत्व॑भिः श॒फानां॑ व्र॒जा भु॒रन्त॒ गोना॒मिषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥७

तव॑ । त्ये । अ॒ग्ने॒ । अ॒र्चयः॑ । महि॑ । व्रा॒ध॒न्त॒ । वा॒जिनः॑ ।

ये । पत्व॑ऽभिः । श॒फाना॑म् । व्र॒जा । भु॒रन्त॑ । गोना॑म् । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥७

तव । त्ये । अग्ने । अर्चयः । महि । व्राधन्त । वाजिनः ।

ये । पत्वऽभिः । शफानाम् । व्रजा । भुरन्त । गोनाम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥७

हे “अग्ने “तव त्वदीयाः “त्ये ते “अर्चयः रश्मयः “महि महदत्यधिकं “वाजिनः अन्नवन्तो वा “व्राधन्त वर्धन्ते । यद्वा लुप्तोपमा । वाजिनोऽश्वा इव । “ये रश्मयः “पत्वभिः पतनैः “शफानां । “गोनां “व्रजा यूथानि “भुरन्त इच्छन्ति । आयता ज्वाला होमाय काङ्क्षन्त इत्यर्थः । ते वर्धन्ते ॥

नवा॑ नो अग्न॒ आ भ॑र स्तो॒तृभ्यः॑ सुक्षि॒तीरिषः॑ ।

ते स्या॑म॒ य आ॑नृ॒चुस्त्वादू॑तासो॒ दमे॑दम॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥८

नवाः॑ । नः॒ । अ॒ग्ने॒ । आ । भ॒र॒ । स्तो॒तृऽभ्यः॑ । सु॒ऽक्षि॒तीः । इषः॑ ।

ते । स्या॒म॒ । ये । आ॒नृ॒चुः । त्वाऽदू॑तासः । दमे॑ऽदमे । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥८

नवाः । नः । अग्ने । आ । भर । स्तोतृऽभ्यः । सुऽक्षितीः । इषः ।

ते । स्याम । ये । आनृचुः । त्वाऽदूतासः । दमेऽदमे । इषम् । स्तोतृऽभ्यः । आ । भर ॥८

हे “अग्ने “स्तोतृभ्यः “नः अस्मभ्यं “नवाः स्तुत्या नूत्ना वा "सुक्षितीः सुनिवासाः सुप्रजा वा “इषः उक्तलक्षणान्यन्नानि “आ “भर प्रयच्छ । "ये वयं “दमेदमे सर्वेषु यागगृहेषु त्वाम् “आनृचुः अर्चयन्ति । “ते वयं “त्वादूतासः त्वां दूतं फलसूचकं लब्धवन्तः सन्तः “स्याम समृद्धा भूयास्म । दमे दमे स्यामेति वा योज्यम् ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने वैकल्पिकस्तोत्रियतृचे ‘ उभे सुश्चन्द्र' इत्येषा तृतीया । सूत्रमुक्तम् ॥

उ॒भे सु॑श्चन्द्र स॒र्पिषो॒ दर्वी॑ श्रीणीष आ॒सनि॑ ।

उ॒तो न॒ उत्पु॑पूर्या उ॒क्थेषु॑ शवसस्पत॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥९

उ॒भे इति॑ । सु॒ऽच॒न्द्र॒ । स॒र्पिषः॑ । दर्वी॒ इति॑ । श्री॒णी॒षे॒ । आ॒सनि॑ ।

उ॒तो इति॑ । नः॒ । उत् । पु॒पू॒र्याः॒ । उ॒क्थेषु॑ । श॒व॒सः॒ । प॒ते॒ । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥९

उभे इति । सुऽचन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।

उतो इति । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते । इषम् । स्तोतृऽभ्यः । आ । भर ॥९

हे “सुश्चन्द्र शोभनाह्लादन शोभनहिरण्य वाग्ने “उभे "सर्पिषः पूर्णे “दर्वी जुहूपभृतौ “आसनि आस्ये "श्रीणीषे श्रयसि पचसि वा । "उतो अपि च “नः अस्मान् “उक्थेषु यागेषु "उत्पुपूर्याः उत्पूरय फलैः। हे "शवसस्पते बलस्य पालयितः ॥

ए॒वाँ अ॒ग्निमं॑जुर्यमु॒र्गी॒र्भिर्य॒ज्ञेभि॑रानु॒षक् ।

दध॑द॒स्मे सु॒वीर्य॑मु॒त त्यदा॒श्वश्व्य॒मिषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥१०

ए॒व । अ॒ग्निम् । अ॒जु॒र्य॒मुः॒ । गीः॒ऽभिः । य॒ज्ञेभिः॑ । आ॒नु॒षक् ।

दध॑त् । अ॒स्मे इति॑ । सु॒ऽवीर्य॑म् । उ॒त । त्यत् । आ॒शु॒ऽअश्व्य॑म् । इषं॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥१०

एव । अग्निम् । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ।

दधत् । अस्मे इति । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् । इषम् । स्तोतृऽभ्यः । आ । भर ॥१०

“एव उक्तरीत्या “अग्निं “गीर्भिः स्तुतिभिः “यज्ञेभिः यज्ञैर्वा तत्साधनैर्हविर्भिर्वा “आनुषक् अनुषक्तम् “अजुः गच्छन्ति। तथा कृत्वा “यमुः यमयन्ति स्थापयन्ति हविर्भिर्यजन्तीत्यर्थः । एवमात्रेयाः स्वान् परोक्षतया निर्दिशन्ति ॥ अजुर्यमुरित्यत्र ‘ आख्यातमाख्यातेन

क्रियासातत्ये ' (पा. सू. २. १. ७२ ग.) इति समासः।। किंच “अस्मे अस्मासु “सुवीर्यं शोभनपुत्रादिकम् "उत अपि च “त्यत् तत् “आश्वश्व्यम् । आशवोऽश्वा यस्य भवन्ति स आश्वश्वः । तस्य भाव आश्वश्व्यम् । तदपि “दधत् धारयति ॥ ॥ २३ ॥

**टिप्पणी**

इषमुपरि टिप्पणी (http://puranastudy.freeoda.com/pur_index3/isha1.htm)

# ऋग्वेदः सूक्तं ५.७



दे. अग्निः। अनुष्टुप्, १० पङ्क्तिः

सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।

वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥१॥

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।

अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥२॥

सं यदिषो वनामहे सं हव्या मानुषाणाम् ।

उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥३॥

स स्मा कृणोति केतुमा नक्तं चिद्दूर आ सते ।

पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥४॥

अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति ।

अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥५॥

यं मर्त्यः पुरुस्पृहं विदद्विश्वस्य धायसे ।

प्र स्वादनं पितूनामस्ततातिं चिदायवे ॥६॥

स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः ।

हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतविषिः ॥७॥

शुचिः ष्म यस्मा अत्रिवत्प्र स्वधितीव रीयते ।

सुषूरसूत माता क्राणा यदानशे भगम् ॥८॥

आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे ।

ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः ॥९॥

इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे ।

आदग्ने अपृणतोऽत्रिः सासह्याद्दस्यूनिषः सासह्यान्नॄन् ॥१०॥

**सायणभाष्यम्**

‘ सखायः सं वः' इति दशर्चं सप्तमं सूक्तम् । आत्रेय इष ऋषिः । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । तथा चानुक्रान्तं — ' सखाय इषः पङ्क्त्यन्तम्' इति । प्रातरनुवाके आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चोत्तमावर्जमिदं सूक्तम् । सूत्रितं च --सखायः सं वस्त्वामग्ने हविष्मन्त इति सूक्ते ' ( आश्व. श्रौ. ४. १३) इति ।।

सखा॑य॒ः सं व॑ः स॒म्यञ्च॒मिषं॒ स्तोमं॑ चा॒ग्नये॑ ।

वर्षि॑ष्ठाय क्षिती॒नामू॒र्जो नप्त्रे॒ सह॑स्वते ॥१

सखा॑यः । सम् । व॒ः । स॒म्यञ्च॑म् । इष॑म् । स्तोम॑म् । च॒ । अ॒ग्नये॑ ।

वर्षि॑ष्ठाय । क्षि॒ती॒नाम् । ऊ॒र्जः । नप्त्रे॑ । सह॑स्वते ॥१

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ।

वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥१

हे "सखायः सखिभूता ऋत्विजः "वः यूयं “सं संस्कुरुत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । किंच "सम्यञ्चम् "इषम् अन्नं "स्तोमं स्तोत्रं "चाग्नये वर्षिष्ठाय अतिशयेन प्रवृद्धाय “क्षितीनां यजमानानामर्थाय वर्षिष्ठाय प्रवृद्धतमाय “ऊर्जो "नप्त्रे बलस्य न पातयित्रे तत्पुत्राय वा “सहस्वते बलवते संस्कुरुतेति ॥

कुत्रा॑ चि॒द्यस्य॒ समृ॑तौ र॒ण्वा नरो॑ नृ॒षद॑ने ।

अर्ह॑न्तश्चि॒द्यमि॑न्ध॒ते सं॑ज॒नय॑न्ति ज॒न्तव॑ः ॥२

कुत्र॑ । चि॒त् । यस्य॑ । सम्ऽऋ॑तौ । र॒ण्वाः । नरः॑ । नृ॒ऽसद॑ने ।

अर्ह॑न्तः । चि॒त् । यम् । इ॒न्ध॒ते । स॒म्ऽज॒नय॑न्ति । ज॒न्तवः॑ ॥२

कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ।

अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥२

सोऽग्निः “कुत्र “चित् वर्तते इति शेषः । कुत्रास्ते । "यस्य अग्नेः "समृतौ संप्राप्तौ “रण्वाः रममाणाः "नरः नेतार ऋत्विजः । "नृषदने यागगृहे "अर्हन्तश्चित् । चिदिति पूजायाम् । अर्हन्तः पूज्याः पूजयन्तो वा सन्तः “यमिन्धते दीपयन्ति । तदर्थं “संजनयन्ति च अरण्यां "जन्तवः प्राणिनः । स कुत्रेति संबन्धः ॥

सं यदि॒षो वना॑महे॒ सं ह॒व्या मानु॑षाणाम् ।

उ॒त द्यु॒म्नस्य॒ शव॑स ऋ॒तस्य॑ र॒श्मिमा द॑दे ॥३

सम् । यत् । इ॒षः । वना॑महे । सम् । ह॒व्या । मानु॑षाणाम् ।

उ॒त । द्यु॒म्नस्य॑ । शव॑सा । ऋ॒तस्य॑ । र॒श्मिम् । आ । द॒दे॒ ॥३

सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ।

उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥३

"यत् यदा "इषः अन्नानि “सं "वनामहे संभजामहे । यदी च "मानुषाणां मनुष्याणाम् अस्माकं "हव्या हवींषि अग्निः “सं सेवते “उत तदानीं “द्युम्नस्य द्योतमानस्यान्नस्य “शवसा बलेन सामर्थ्येन “ऋतस्य उदकस्य ग्राहकं "रश्मिमा "ददे आदत्तेऽग्निः । फलजनकं

तेजः स्वीकृतवान् इत्यर्थः । यद्वा । "ऋतस्य यज्ञस्य रश्मिं रश्मिवत् ग्राहकं स्तवम् आ ददे स्वीकरोति ॥

स स्मा॑ कृणोति के॒तुमा नक्तं॑ चिद्दू॒र आ स॒ते ।

पा॒व॒को यद्वन॒स्पती॒न्प्र स्मा॑ मि॒नात्य॒जरः॑ ॥४

सः । स्म॒ । कृ॒णो॒ति॒ । के॒तुम् । आ । नक्त॑म् । चि॒त् । दू॒रे । आ । स॒ते ।

पा॒व॒कः । यत् । वन॒स्पती॑न् । प्र । स्म॒ । मि॒नाति॑ । अ॒जरः॑ ॥४

सः । स्म । कृणोति । केतुम् । आ । नक्तम् । चित् । दूरे । आ । सते ।

पावकः । यत् । वनस्पतीन् । प्र । स्म । मिनाति । अजरः ॥४

”स "स्म स खल्वग्निः "कृणोति करोति "केतुं प्रज्ञानम् "आ सर्वतः । कस्येत्युच्यते । चिदप्यर्थे । "नक्तं "चित् रात्रावपि "दूरे “आ “सते । आ इति चार्थे । दूरेऽपि वर्तमानाय मनुष्याय । कदा । "यत् यदा "पावकः अयमग्निः "अजरः अजीर्णोऽनभिभाव्यः सन् “वनस्पतीन् एधांसि “प्र “स्म “मिनाति प्रकर्षेण दहति । स्मेति पूरणः ॥

अव॑ स्म॒ यस्य॒ वेष॑णे॒ स्वेदं॑ प॒थिषु॒ जुह्व॑ति ।

अ॒भीमह॒ स्वजे॑न्यं॒ भूमा॑ पृ॒ष्ठेव॑ रुरुहुः ॥५

अव॑ । स्म॒ । यस्य॑ । वेष॑णे । स्वेद॑म् । प॒थिषु॑ । जुह्व॑ति ।

अ॒भि । ई॒म् । अह॑ । स्वऽजे॑न्यम् । भूम॑ । पृ॒ष्ठाऽइ॑व । रु॒रु॒हुः॒ ॥५

अव । स्म । यस्य । वेषणे । स्वेदम् । पथिषु । जुह्वति ।

अभि । ईम् । अह । स्वऽजेन्यम् । भूम । पृष्ठाऽइव । रुरुहुः ॥५

"यस्य अग्नेः "वेषणे परिचर्यायां "पथिषु होममार्गेषु रश्मिषु "स्वेदं स्रवदाज्यम् "अव अधोमुखं "जुह्वति अध्वर्यवः तदानीम् "ईम् एनमग्निम् “अभि "रुरुहुः "अह । अभ्यारोहन्त्येवाज्यधाराः । अह इति विनिग्रहार्थीयः । "स्वजेन्यं स्वोत्पन्नं “भूम । बहु भवतीति भूमापत्यम् । तत् “पृष्ठेव पितुः पृष्ठदेशानिव । पुत्राः यथा पितुरङ्कम् आरोहन्ति तद्वत् ॥ ॥ २४ ॥

यं मर्त्यः॑ पुरु॒स्पृहं॑ वि॒दद्विश्व॑स्य॒ धाय॑से ।

प्र स्वार्दनं पितूनामस्तंतातिं चिदायवें ॥६

यम् । मर्त्यः । पुरुऽस्पृहंम् । विदत् । विश्वंस्य । धायंसे ।

प्र । स्वार्दनम् । पितूनाम् । अस्तंऽतातिम् । चित् । आयवें ॥६

यम् । मर्त्यः । पुरुऽस्पृहम् । विदत् । विश्वस्य । धायसे ।

प्र । स्वादनम् । पितूनाम् । अस्तऽतातिम् । चित् । आयवे ॥६

"यम् अग्निं "पुरुस्पृहं बहुभिः स्पृहणीयं "विदत् वेत्ति । "मर्त्यः यजमानः "विश्वस्य "धायसे सर्वस्य व्यापारार्थं "पितूनाम् अन्नानां "प्र "स्वादनं प्रकर्षेण स्वादूकर्तारम् "अस्ततातिम् अस्ते गृहे निवासकर्तारम् "आयवे अन्नार्थं यजमानार्थं वा । "चित् पूरण:॥

स हि ष्मा धन्वाक्षिंतं दाता न दात्या पशुः ।

हिरिंश्मश्रुः शुचिंदन्नृभुरनिंभृष्टतविषिः ॥७

सः । हि । स्म । धन्वं । आऽक्षिंतम् । दातां । न । दातिं । आ । पशुः ।

हिरिंऽश्मश्रुः । शुचिंऽदन् । ऋभुः । अनिंभृष्टऽतविषिः ॥७

सः । हि । स्म । धन्व । आऽक्षितम् । दाता । न । दाति । आ । पशुः ।

हिरिऽश्मश्रुः । शुचिऽदन् । ऋभुः । अनिभृष्टऽतविषिः ॥७

"स "हि "ष्म स खल्वग्निः "धन्व निरुदकप्रदेशम् "आक्षितं तृणकाष्ठादिभिराक्षितम् "आ "दाति सर्वतः खण्डयति दहतीत्यर्थः । "दाता तृणादिखण्डयिता "पशुः "न पशुरिव । पशुर्यथा तृणजातं क्रमेण भक्षयति तद्वत् । "हिरिश्मश्रुः हिरण्यश्मश्रुः "शुचिदन् दीप्तदन्तः "ऋभुः उरु भवन् । महानित्यर्थः । "अनिभृष्टतविषिः अपीडितबलः ॥

शुचिंः ष्म यस्मां अत्रिवत्प्र स्वधिंतीव रीयंते ।

सुषूरंसूत माता क्राणा यदांनशे भगंम् ॥८

शुचिः । स्म । यस्मैं । अत्रिऽवत् । प्र । स्वधिंतिःऽइव । रीयंते ।

सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भगंम् ॥८

शुचिः । स्म । यस्मै । अत्रिऽवत् । प्र । स्वधितिःऽइव । रीयते ।

सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भगम् ॥८

अयमग्निः "शुचिः "ष्म दीप्तः खलु । "यस्मै अग्नये "अत्रिवत् अत्रिरिव यजमानो हविर्दातुं "प्र "रीयते प्रगच्छति । यद्वा । स्मेति पूरणः । शुचिर्यस्मै ॥ प्रथमार्थे चतुर्थी । दीप्तो योऽत्रिवत् । अत्ति तृणमित्यत्रिः पशुः । स इव । स यथा तृणानि खादमानो गच्छति तद्वद्दहतीत्यर्थः । "स्वधितिरिव परशुरिव छिन्दन् । "सुषूः सुप्रसवा "माता अरणिः "असूत "क्राणा कुर्वाणं जगदुपकारकम् । "यत् यस्मात् य इति वा । योऽग्निः "भगम् अन्नम् "आनशे अश्नुते ।।

आ यस्ते॑ स॒र्पिरा॑सु॒तेऽग्ने॒ शमस्ति॒ धाय॑से ।

ऐषु॑ द्यु॒म्नमु॒त श्रव॒ आ चि॒त्तं मर्त्ये॑षु धाः ॥९

आ । यः । ते॒ । स॒र्पिः॒ऽआ॒सु॒ते॒ । अग्ने॑ । शम् । अस्ति॑ । धाय॑से ।

आ । ए॒षु॒ । द्यु॒म्नम् । उ॒त । श्रवः॑ । आ । चि॒त्तम् । मर्त्ये॑षु । धाः॒ ॥९

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे ।

आ । एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥९

हे "सर्पिरासुते घृताख्यान्न "अग्ने "यः त्वम् "आ सर्वतो भवसि तादृशाय "धायसे सर्वस्य धात्रे "ते तुभ्यं "शमस्ति सुखमस्ति । स्तुतेः सकाशात् । तथा चेत् "एषु "मर्त्येषु स्तोतृष्वात्रेयेषु "द्युम्नं यशः "आ "धाः आधेहि। "उत अपि च "श्रवः अन्नम् आ धाः । "चित्तं त्वदीयामनुग्रहबुद्धिमपि "आ धाः ॥

इति॑ चिन्म॒न्युम॒ध्रिज॒स्त्वादा॑त॒मा प॒शुं द॑दे ।

आद॑ग्ने॒ अपृ॑ण॒तोऽत्रिः॑ सासह्या॒द्दस्यू॑नि॒षः सा॑सह्या॒न्नॄन् ॥१०

इति॑ । चि॒त् । म॒न्युम् । अ॒ध्रिजः॑ । त्वाऽदा॑तम् । आ । प॒शुम् । द॒दे॒ ।

आत् । अ॒ग्ने॒ । अपृ॑णतः । अत्रिः॑ । स॒स॒ह्या॒त् । दस्यू॑न् । इ॒षः । स॒स॒ह्या॒त् । नॄन् ॥१०

इति । चित् । मन्युम् । अध्रिजः । त्वाऽदातम् । आ । पशुम् । ददे ।

आत् । अग्ने । अपृणतः । अत्रिः । ससह्यात् । दस्यून् । इषः । ससह्यात् । नॄन् ॥१०

"इति “चित् इत्थं कृतप्रकारेण "मन्युं मननसाधनं स्तोत्रम् "अध्रिजः । अधृतम् अन्यैरग्निव्यतिरिक्तैः अधृष्यं वा जनयिता ऋषिः “त्वादातं त्वया दातव्यं "पशुम् "आ "ददे आदत्ते । आददीत वा । “आत् अनन्तरमेव अग्नेः "अपृणतः अददतः “दस्यून् "अत्रिः तद्गोत्रः “इषः “सासह्यात् भृशमभिभवेत् । इषः एष्टॄन् “नॄन् विरोधिनः “सासह्यात् । पुनरुक्तिरादरार्था ॥ ॥ २५ ॥

**टिप्पणी**

ऋषिः - इष आत्रेयः

इषोपरि टिप्पणी (http://puranastudy.freeoda.com/pur_index3/isha1.htm)

# ऋग्वेदः सूक्तं ५.८



दे. अग्निः। जगती

---

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।

पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥१॥

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे ।

बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषम् ॥२॥

त्वामग्ने मानुषीरीळते विशो होत्राविदं विविचिं रत्नधातमम् ।

गुहा सन्तं सुभग विश्वदर्शतं तुविष्वणसं सुयजं घृतश्रियम् ॥३॥

त्वामग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणन्तो नमसोप सेदिम ।

स नो जुषस्व समिधानो अङ्गिरो देवो मर्तस्य यशसा सुदीतिभिः ॥४॥

त्वमग्ने पुरुरूपो विशेविशे वयो दधासि प्रत्नथा पुरुष्टुत ।

पुरूण्यन्ना सहसा वि राजसि त्विषिः सा ते तित्विषाणस्य नाधृषे ॥५॥

त्वामग्ने समिधानं यविष्ठ्य देवा दूतं चक्रिरे हव्यवाहनम् ।
उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति ॥६॥
त्वामग्ने प्रदिव आहुतं घृतैः सुम्नायवः सुषमिधा समीधिरे ।
स वावृधान ओषधीभिरुक्षितोऽभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥७॥

**सायणभाष्यम्**

'त्वामग्ने' इति सप्तर्चमष्टमं सूक्तमात्रेयस्य इषस्य आर्षं जागतमाग्नेयम् । ' त्वामग्ने सप्त जागतम् ' इत्यनुक्रमणिका । प्रातरनुवाके आग्नेये क्रतौ जागते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । तथा च सूत्रं - जनस्य गोपास्त्वमग्न ऋतायवः' ( आश्व. श्रौ. ४. १३ ) इति ॥

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।

पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥१

त्वाम् । अग्ने । ऋतऽयवः । सम् । ईधिरे । प्रत्नम् । प्रत्नासः । ऊतये । सहःऽकृत ।

पुरुऽचन्द्रम् । यजतम् । विश्वऽधायसम् । दमूनसम् । गृहऽपतिम् । वरेण्यम् ॥१

त्वाम् । अग्ने । ऋतऽयवः । सम् । ईधिरे । प्रत्नम् । प्रत्नासः । ऊतये । सहःऽकृत ।

पुरुऽचन्द्रम् । यजतम् । विश्वऽधायसम् । दमूनसम् । गृहऽपतिम् । वरेण्यम् ॥१

हे "सहस्कृत बलस्य कर्तः "अग्ने "प्रत्नं पुरातनं "त्वां "प्रत्नासः पुरातनाः “ऋतायवः यज्ञकामा ऋषयः “ऊतये स्वरक्षणाय "समीधिरे सम्यग्दीपितवन्तः । कीदृशं त्वाम् । "पुरुश्चन्द्रं बहुधनम् अतिशयेनाह्लादकं वा "यजतं यष्टव्यं “विश्वधायसं बह्वन्नं "दमूनसं दानमनसं “गृहपतिं यजमानगृहस्य पालकं "वरेण्यं वरणीयम् ॥

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे ।

बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषम् ॥२

त्वाम् । अग्ने । अतिथिम् । पूर्व्यम् । विशः । शोचिःऽकेशम् । गृहऽपतिम् । नि । सेदिरे ।

बृ॒हत्ऽके॑तुम् । पु॒रु॒ऽरूप॑म् । ध॒न॒ऽस्पृत॑म् । सु॒ऽशर्मा॑णम् । सु॒ऽअव॑सम् । ज॒र॒त्ऽविष॑म् ॥२

त्वाम् । अग्ने । अतिथिम् । पूर्व्यम् । विशः । शोचिःऽकेशम् । गृहऽपतिम् । नि । सेदिरे ।

बृहत्ऽकेतुम् । पुरुऽरूपम् । धनऽस्पृतम् । सुऽशर्माणम् । सुऽअवसम् । जरत्ऽविषम् ॥२

हे "अग्ने "त्वां "विशः यजमानाः "गृहपतिं गृहस्वामिनं "नि "षेदिरे । गार्हपत्यरूपेण स्थापितवन्त इत्यर्थः । कीदृशं त्वाम् । "अतिथिम् अतिथिवत्पूज्यं "पूर्व्यं पुरातनं "शोचिष्केशं दीप्तज्वालं "बृहत्केतुं प्रभूतप्रज्ञानं "पुरुरूपम् आहवनीयादिरूपेण बहुरूपं "धनस्पृतं धनानां स्पर्तारं "सुशर्माणं शोभनसुखं "स्ववसं सुरक्षणं "जरद्विषं जरतां वृक्षाणां व्यापकं जीर्णोदकं वा ॥ ।

अग्नीनां परस्परं संसर्गे विविचयेऽग्नये काचिदिष्टिः । तत्र ' त्वामग्ने मानुषीः ' इति याज्या । सूत्रितं च - ' त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये' (आश्व. श्रौ. ३. १३ ) इति ॥

त्वाम॑ग्ने॒ मानु॑षीरीळते॒ विशो॑ होत्रा॒विदं॒ विवि॑चिं रत्न॒धात॑मम् ।

गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुविष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥३

त्वाम् । अ॒ग्ने॒ । मानु॑षीः । ई॒ळ॒ते॒ । विशः॑ । हो॒त्रा॒ऽविद॑म् । विवि॑चिम् । र॒त्न॒ऽधात॑मम् ।

गुहा॑ । सन्त॑म् । सु॒ऽभ॒ग॒ । वि॒श्वऽद॑र्शतम् । तु॒वि॒ऽस्व॒नस॑म् । सु॒ऽयज॑म् । घृ॒त॒ऽश्रिय॑म् ॥३

त्वाम् । अग्ने । मानुषीः । ईळते । विशः । होत्राऽविदम् । विविचिम् । रत्नऽधातमम् ।

गुहा । सन्तम् । सुऽभग । विश्वऽदर्शतम् । तुविऽस्वनसम् । सुऽयजम् । घृतऽश्रियम् ॥३

हे "अग्ने "सुभग शोभनधन "त्वां "मानुषीः "विशः मानुषसंबन्धिन्यः सर्वाः प्रजाः "ईळते स्तुवन्ति । कीदृशं त्वाम् । "होत्राविदं होत्राणां होमानां सप्तहोत्रकाणां वा वेत्तारं "विविचिं विवेचकं सदसतोः "रत्नधातमं रमणीयानां धनानां दातृतमं "गुहा गुहायामरण्यां हृदयेषु वा "सन्तं सर्वदा वर्तमानं "विश्वदर्शतं सर्वैः द्रष्टव्यं "तुविष्वणसं प्रभूतध्वनिं "सुयजं सुष्ठु यष्टारं "घृतश्रियं घृतं श्रयन्तम् ॥

त्वाम॑ग्ने धर्ण॒सिं वि॒श्वधा॑ व॒यं गी॒र्भिर्गृ॒णन्तो॒ नम॒सोप॑ सेदिम ।

स नो॑ जुषस्व समिधा॒नो अ॑ङ्गिरो दे॒वो मर्त॑स्य य॒शसा॑ सुदी॒तिभि॑ः ॥४

त्वाम् । अ॒ग्ने॒ । ध॒र्ण॒सिम् । वि॒श्वधा॑ । व॒यम् । गीः॒ऽभिः । गृ॒णन्तः॑ । नम॑सा । उप॑ । से॒दि॒म॒ ।

सः । न॒ः । जु॒ष॒स्व॒ । स॒म्ऽइ॒धा॒नः । अ॒ङ्गि॒र॒ः । दे॒वः । मर्त॑स्य । य॒शसा॑ । सु॒दी॒तिऽभिः॑ ॥४

त्वाम् । अग्ने । धर्णसिम् । विश्वधा । वयम् । गीःऽभिः । गृणन्तः । नमसा । उप । सेदिम ।

सः । नः । जुषस्व । सम्ऽइधानः । अङ्गिरः । देवः । मर्तस्य । यशसा । सुदीतिऽभिः ॥४

हे "अग्ने “धर्णसिं सर्वस्य धारकं “त्वां “वयम् आत्रेया वा “विश्वधा बहुप्रकारेण “गीर्भिर्गृणन्तः स्तुवन्तः "नमसा नमस्कारेण "उप “सेदिम उपसन्ना भवेम । "सः त्वं “नः अस्मान् "जुषस्व सेवस्व धनादिभिः । "समिधानः सम्यग्दीप्तो दीप्यमानोऽस्माभिर्हे "अङ्गिरः सर्वत्र गन्तरङ्गिरसः पुत्र वा “देवः दीप्यमानस्त्वं “मर्तस्य यजमानस्य "यशसा “सुदीतिभिः ज्वालाभिः सह जुषस्व ॥

त्वम॑ग्ने पुरु॒रूपो॑ वि॒शेवि॑शे॒ वयो॑ दधासि प्र॒त्नथा॑ पुरुष्टुत ।

पु॒रूण्यन्ना॒ सह॑सा॒ वि रा॑जसि॒ त्विषि॒ः सा ते॑ तित्विषा॒णस्य॒ नाधृषे॑ ॥५

त्वम् । अ॒ग्ने॒ । पु॒रु॒ऽरूपः॑ । वि॒शेऽवि॑शे । वयः॑ । द॒धा॒सि॒ । प्र॒त्नऽथा॑ । पु॒रु॒ऽस्तु॒त॒ ।

पु॒रूणि॑ । अन्ना॑ । सह॑सा । वि । रा॒ज॒सि॒ । त्विषिः॑ । सा । ते॒ । ति॒त्वि॒षा॒णस्य॑ । न । आ॒ऽधृषे॑ ॥५

त्वम् । अग्ने । पुरुऽरूपः । विशेऽविशे । वयः । दधासि । प्रत्नऽथा । पुरुऽस्तुत ।

पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः । सा । ते । तित्विषाणस्य । न । आऽधृषे ॥५

हे "अग्ने "त्वं "पुरुरूपः सन् "विशेविशे सर्वस्मै यजमानाय "प्रत्नथा पुराण इव “वयः अन्नं "दधासि धारयसि । हे “पुरुष्टुत बहुभिः स्तुत “पुरूणि बहूनि "अन्ना अन्नानि चरुपुरोडाशादीनि "सहसा बलेन "वि “राजसि ईश्वरो भवसि स्वीकर्तुम् । "तित्विषाणस्य दीप्तस्य “ते तव "सा प्रसिद्धा "त्विषिः दीप्तिः "नाधृषे अन्यैरधृष्या भवति ॥

त्वाम॑ग्ने समिधा॒नं य॑विष्ठ्य दे॒वा दू॒तं च॑क्रिरे हव्य॒वाह॑नम् ।

उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तं त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्म॑ति ॥६

त्वाम् । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नम् । य॒वि॒ष्ठ्य॒ । दे॒वाः । दू॒तम् । च॒क्रि॒रे॒ । ह॒व्य॒ऽवाह॑नम् ।

उ॒रु॒ऽज्रय॑सम् । घृ॒तऽयो॑निम् । आऽहु॑तम् । त्वे॒षम् । चक्षुः॑ । द॒धि॒रे॒ । चो॒द॒यत्ऽम॑ति ॥६

त्वाम् । अग्ने । सम्ऽइधानम् । यविष्ठ्य । देवाः । दूतम् । चक्रिरे । हव्यऽवाहनम् ।

उरुऽज्रयसम् । घृतऽयोनिम् । आऽहुतम् । त्वेषम् । चक्षुः । दधिरे । चोदयत्ऽमति ॥६

हे "यविष्ठ्य युवतम "अग्ने "समिधानं सम्यगिध्यमानं "त्वां "हव्यवाहनं हविषां वोढारं “दूतं “चक्रिरे कृतवन्तः "देवाः । त्रयाणामग्नीनां मध्ये हव्यवाहनः खलु पूर्वं देवैर्हविर्वहनाय दूतः कृतः । ‘ हव्यवाहनो देवानाम्' (तै. सं. २. ५. ८.६) इति हि श्रुतिः । किंच “उरुज्रयसं प्रभूतवेगं “घृतयोनिम् । घृतं योनिः कारणं यस्य तम् । “आहुतं त्वां “चोदयन्मति । चोदयन्ती मतिर्यस्य तच्चोदयन्मति । “त्वेषं दीप्तं "चक्षुः उक्तलक्षणं सर्वप्रकाशकं चक्षुःस्थानीयं कृत्वा “दधिरे देवा मनुष्याश्च । मत्या हि चक्षुश्चोद्यते ॥

त्वाम॑ग्ने प्र॒दिव॒ आहु॑तं घृ॒तैः सु॑म्ना॒यव॑ः सुष॒मिधा॒ समी॑धिरे ।

स वा॑वृधा॒न ओष॑धीभिरुक्षि॒तो॒३॒ऽभि ज्रयाँ॑सि॒ पार्थि॑वा॒ वि ति॑ष्ठसे ॥७

त्वाम् । अ॒ग्ने॒ । प्र॒ऽदिवः॑ । आऽहु॑तम् । घृ॒तैः । सु॒म्न॒ऽयवः॑ । सु॒ऽस॒मिधा॑ । सम् । ई॒धि॒रे॒ ।

सः । व॒वृ॒धा॒नः । ओष॑धीभिः । उ॒क्षि॒तः । अ॒भि । ज्रयाँ॑सि । पार्थि॑वा । वि । ति॒ष्ठ॒से॒ ॥७

त्वाम् । अग्ने । प्रऽदिवः । आऽहुतम् । घृतैः । सुम्नऽयवः । सुऽसमिधा । सम् । ईधिरे ।

सः । ववृधानः । ओषधीभिः । उक्षितः । अभि । ज्रयांसि । पार्थिवा । वि । तिष्ठसे ॥७

हे "अग्ने "घृतैः “आहुतं “त्वां "प्रदिवः पुरातनाः “सुम्नायवः सुखमिच्छन्तो यजमानाः “सुषमिधा शोभनेन इध्मेन "समीधिरे सम्यक् दीपितवन्तः । "सः त्वं “वावृधानः वर्धमानः “ओषधीभिः “उक्षितः सिक्तः “ज्रयांसि अन्नानि "पार्थिवा पार्थिवान् वृक्षान् । यद्वा । पार्थिवेति ज्रयोविशेषणम् । पार्थिवानि चरुपुरोडाशादिकानि “अभि “वि “तिष्ठसे अभिव्यज्य वर्तसे ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

# ऋग्वेदः सूक्तं ५.९

ऋग्वेदः - मण्डल ५
← सूक्तं ५.८ सूक्तं ५.९ सूक्तं ५.१० →
गय आत्रेयः।

दे. अग्निः। अनुष्टुप्, ५, ७ पङ्क्तिः।

---

त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।

मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥१॥

अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।

सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥२॥

उत स्म यं शिशुं यथा नवं जनिष्टारणी ।

धर्तारं मानुषीणां विशामग्निं स्वध्वरम् ॥३॥

उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणाम् ।

पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥४॥

अध स्म यस्यार्चयः सम्यक्संयन्ति धूमिनः ।

यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥५॥

तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः ।

द्वेषोयुतो न दुरिता तुर्याम मर्त्यानाम् ॥६॥

तं नो अग्ने अभी नरो रयिं सहस्व आ भर ।

स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे ॥७॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।

यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

पञ्चमे मण्डले प्रथमेऽनुवाके पूर्वमष्टौ सूक्तानि व्याख्यातानि । 'त्वामग्ने हविष्मन्तः' इति सप्तर्चं नवमं सूक्तम् आत्रेयस्य गयस्यार्षम् । सप्तमीपञ्चम्यौ पङ्क्ती शिष्टाः अनुष्टुभः । अग्निर्देवता । तथा चानुक्रम्यते -- त्वामग्ने गयोऽन्त्यापञ्चम्यौ पङ्क्ती ' इति । प्रातरनुवाके आश्विनशस्त्रे च एतदादिके द्वे सूक्ते शंसनीये । तथैव सूत्रितं -- त्वामग्ने हविष्मन्त इति सूक्ते ' ( आश्व. श्रौ. ४. १३) इति ॥

त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।

मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥१

त्वाम् । अग्ने । हविष्मन्तः । देवम् । मर्तासः । ईळते ।

मन्ये । त्वा । जातऽवेदसम् । सः । हव्या । वक्षि । आनुषक् ॥१

त्वाम् । अग्ने । हविष्मन्तः । देवम् । मर्तासः । ईळते ।

मन्ये । त्वा । जातऽवेदसम् । सः । हव्या । वक्षि । आनुषक् ॥१

हे “अग्ने “त्वां देवं दीप्यमानं “हविष्मन्तः होमसाधनद्रव्यसमेताः “मर्तासः मर्त्याः “ईळते स्तुवन्ति । अहं च "जातवेदसम् । जातमुत्पन्नं चराचरं भूतजातं वेत्तीति जातवेदाः । अथवा जातानि स्थावरजङ्गमात्मकानि एनं विदुरिति जातवेदाः । यद्वा । वेद इति धननाम । जातं सर्वं वेदो धनं यस्यासौ जातवेदाः । एवंविधं “त्वा त्वां मन्ये स्तौमि । मनिरत्र स्तुत्यर्थे वर्तते धातूनामनेकार्थत्वात्। “सः त्वं "हव्या हवनसाधनानि हवींषि “आनुषक् निरन्तरतया अनुषक्तं यथा तथा “वक्षि वहसि ॥ हविष्मन्तः । हविःशब्दः औणादिकइस्प्रत्ययान्तः । प्रत्ययस्वरेणान्तोदात्तः । ‘ तदस्यास्ति' इति मतुप् । पदसंज्ञाया अपवादत्वेन ‘ तसौ मत्वर्थे ' इति भसंज्ञायां रुत्वाभावः । मतुब्जसोरनुदात्तत्वात् प्रत्ययस्वर एव शिष्यते । देवम् । अच्प्रत्ययान्तत्वात् देवशब्दोऽन्तोदात्तः । मर्तासः । ‘ मृङ् प्राणत्यागे'। ' असिहसिमृङ् ' इत्यादिना तन् । गुणः । मर्तः । जसेरसुक् । मर्तासः । नित्त्वादाद्युदात्तः । ईळते। 'ईड स्तुतौ'। अदादित्वाच्छपो लुक्। आत्मनेपदेष्वनतः '। टेरेत्वम् । अत्र डकारस्य अध्येतृसंप्रदायप्राप्तो लकारः । लसार्वधातुकानुदात्तत्वेन धातुस्वरे प्राप्ते आष्टमिको निघातः । मन्ये । श्यनो नित्त्वात् आद्युदात्तत्वम् । त्वा ।' युषि मिश्रणे'। मदिक्प्रत्ययान्तो युष्मच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । त्वमावेकवचने ' इति मपर्यन्तस्य त्वादेशः । ‘ द्वितीयायां च' ( पा. सू. ७. २. ८७ ) इत्याकारः। “एकादेश उदात्तेनोदात्तः' इत्येकादेशोऽप्युदात्त एव । त्वामौ द्वितीयायाः' इति त्वादेशः । स्थानिवद्भावेनान्तोदात्तत्वे प्राप्ते ‘ अनुदात्तं सर्वमपादादौ ' इत्यनुदात्तत्वम् । जातवेदसम् । “जनी प्रादुर्भावे' । क्तः । ‘ श्वीदितो निष्ठायाम् ' इतीट्प्रतिषेधः । ‘ जनसनखनां सञ्झलोः' इत्यात्वम् । प्रत्ययस्वरेणान्तोदात्तः । वेदस्शब्दोऽपि असुन्प्रत्ययान्तत्वात् आद्युदात्तः । कर्मधारयपक्षे समासान्तोदात्तापवादत्वेन ‘ तत्पुरुषे तुल्यार्थ° ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम् । तदपवादत्वेन ‘गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इति पूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहिपक्षे ' बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति । हव्या । हवमर्हतीत्यस्मिन्नर्थे ‘यः' इत्यनुवर्तमाने 'छन्दसि च ' इति यः । नपुंसकत्वाच्छिरादेशः । ‘ शेश्छन्दसि बहुलम्' इति लोपः । प्रत्ययलक्षणेन नुम् । दीर्घनलोपौ । प्रत्ययस्वरेणान्तोदात्तः । वक्षि ।' वह प्रपणे'। सिप्। लुगनुवृत्तौ ‘ बहुलं छन्दसि ' इति शपो लुक् । ढत्वकत्वषत्वानि । सिपः पित्त्वादनुदात्तत्वेन धातुस्वरेण आद्युदात्तत्वे प्राप्ते निघातः । आनुषक् । अनुपूर्वस्य षञ्जेः क्विप् नकारलोपः कुत्वं च । धात्वादेः सकारस्य ' उपसर्गात्सुनोति°' इत्यादिना षत्वम् । दीर्घश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

अ॒ग्निर्होता॒ दास्व॑त॒ः क्षय॑स्य वृ॒क्तब॑र्हिषः ।

सं य॒ज्ञास॒श्चर॑न्ति॒ यं सं वाजा॑सः श्रव॒स्यव॑ः ॥२

अ॒ग्निः । होता॑ । दास्व॑तः । क्षय॑स्य । वृ॒क्तऽब॑र्हिषः ।

सम् । य॒ज्ञासः॑ । चर॑न्ति । यम् । सम् । वाजा॑सः । श्र॒व॒स्यवः॑ ॥२

अग्निः । होता । दास्वतः । क्षयस्य । वृक्तऽबर्हिषः ।

सम् । यज्ञासः । चरन्ति । यम् । सम् । वाजासः । श्रवस्यवः ॥२

“यम् अग्निं “यज्ञासः सर्वे यज्ञाः “सं “चरन्ति सहिता गच्छन्ति । “श्रवस्यवः यजमानस्य प्रभूतां कीर्तिं संपादयन्तः “वाजासः हवींषि यमग्निं “सं चरन्ति प्राप्नुवन्ति । एवंविशिष्टः “अग्निः “दास्वतः हविष्प्रक्षेपणादिदानवतः “वृक्तबर्हिषः। वृक्तानि लूनानि बर्हींषि दर्भा

येनासौ वृक्तबर्हिः । तस्य “क्षयस्य । क्षियन्ति निवसन्त्यस्मिन् स्वर्गसाधनफलानीति क्षयः । तस्य यजमानस्य यागार्थं “होता देवानामाह्वाता भवति ॥ दास्वतः । ‘दा दाने '। असुन्प्रत्ययान्तः । मतुपः आदुपधत्वात् वत्वम् । धातुस्वरेणाद्युदात्त एव। क्षयस्य । ‘क्षि निवासगत्योः'। 'क्षयो निवासे ' इत्याद्युदात्तत्वम् । वृक्तबर्हिषः । ‘ वृजी वर्जने '। वर्जनम् अत्रोपचारात् छेदनम् । निष्ठा । प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । यज्ञासः । यज्ञशब्दः ‘यजयाच°' इत्यादिना नङ्प्रत्ययान्तः अन्तोदात्तः । चरन्ति । ‘चर गतिभक्षणयोः'। अदुपदेशाल्लसार्वधातुकानुदात्तत्वम् ।' यद्वृत्तान्नित्यम्' इति निघाताभावः । वाजासः । वजेर्घञ् । वाजः । ‘कर्षात्वतः° ' इत्यन्तोदात्तत्वम्। छान्दसत्वात् ‘ ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः । श्रवस्यवः । ‘ छन्दसि परेच्छायाम्' इति क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः ॥

उ॒त स्म॒ यं शिशुं॑ यथा॒ नवं॒ जनि॑ष्टा॒रणी॑ ।

धर्तारं॒ मानु॑षीणां वि॒शाम॒ग्निं स्व॑ध्व॒रम् ॥३

उ॒त । स्म॒ । यम् । शिशु॑म् । य॒था॒ । नव॑म् । जनि॑ष्ट । अ॒रणी॒ इति॑ ।

ध॒र्तार॑म् । मानु॑षीणाम् । वि॒शाम् । अ॒ग्निम् । सु॒ऽअ॒ध्व॒रम् ॥३

उत । स्म । यम् । शिशुम् । यथा । नवम् । जनिष्ट । अरणी इति ।

धर्तारम् । मानुषीणाम् । विशाम् । अग्निम् । सुऽअध्वरम् ॥३

“उत "स्म अपि च “मानुषीणां मनोर्जातानां “विशाम् । विशन्ति प्रविशन्ति गर्भाशयमिति विशः प्रजाः । तासां “धर्तारम् आहारादिपाकद्वारेण शरीरधातूनां पोषकं “स्वध्वरं शोभनयज्ञं “यम् “अग्निम् “अरणी द्वे अरणी “नवं नूतनं “शिशुं “यथा अपत्यमिव "जनिष्ट अजनिषाताम् । अरणी प्रजानां पोषणार्थं चैतमग्निम् असृजतामित्यर्थः ॥ शिशुम् ।' शो तनूकरणे '। ‘आदेचः' इत्यादिना आत्वम् । ‘ शः कित् सन्वच्च ' इत्युप्रत्ययः सन्वद्भावश्च । द्विर्भावोऽभ्यासस्य ह्रस्वश्च । ‘ सन्यतः ' इतीत्वम् । ‘ आतो धातोः ' इत्याकारलोपः । नित्त्वादाद्युदात्तः । यथा । 'यथेति पादान्ते' इति सर्वानुदात्तः । जनिष्ट । जनी प्रादुर्भावे'। लुङ् । छन्दसत्वाद्वचनव्यत्ययः । अरणी । ‘ ऋ गतौ'।' अर्तिसृभृधृधम्यश्यवितॄभ्योऽनिः' इति अनिप्रत्ययः आद्युदात्तः। आभ्यामतिं गच्छत्यग्निरित्यरणी । कथमपादानार्थे औणादिकोऽनिः । ‘ ताभ्यामन्यत्रोणादयः ' (पा. सू. ३. ४. ७५ ) इति नियमात् भीमादित्वात् सिद्धम् । “मानुषीणाम् । “ मनोर्जातावञ्यतौ षुक्च' इति अञ्प्रत्ययः षुगागमश्च । ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । विशाम् । विश प्रवेशने'। कर्तरि क्विप्। सावेकाचः' इति विभक्तेः उदात्तत्वम् । स्वध्वरम् । हिंसार्थस्य ध्वरतेः पचाद्यच् । न विद्यते ध्वरो यागहिंसा यस्मिन्नित्यध्वरः । बहुव्रीहिस्वरापवादत्वेन ‘ नञ्सुभ्याम् ' इत्यन्तोदात्तः ॥

उ॒त स्म॑ दुर्गृभीयसे पु॒त्रो न ह्वा॒र्याणा॑म् ।

पु॒रू यो दग्धासि॒ वनाग्ने॑ प॒शुर्न यव॑से ॥४

उ॒त । स्म॒ । दुः॒ऽगृ॒भी॒य॒से॒ । पु॒त्रः । न । ह्वा॒र्याणा॑म् ।

पु॒रु । यः । दग्धा॑ । असि॑ । वना॑ । अग्ने॑ । प॒शुः । न । यव॑से ॥४

उत । स्म । दुःऽगृभीयसे । पुत्रः । न । ह्वार्याणाम् ।

पुरु । यः । दग्धा । असि । वना । अग्ने । पशुः । न । यवसे ॥४

“उत "स्म अपि च "ह्वार्याणां कुटिलं गच्छतां सर्पाणाम् । यद्वा । आस्कन्दितादिगतिविशेषेण वक्रगमनानामश्वानां “पुत्रो “न पुत्र इव बालसर्पं इवाशिक्षितबालाश्व इव वा “दुर्गृभीयसे दुःखेन गृह्यसे । हे “अग्ने "यः त्वं “पुरु बहूनि “वना वनानि “दग्धासि दाहको भवसि । कथमिव । “यवसे तृणे "पशुर्न पशुरिव । अयमर्थः । अत्यन्तक्षुधार्तः पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति तद्वदित्यर्थः ॥ दुर्गृभीयसे ।' ग्रह उपादाने' । यक् । ‘ब्रुव ईट्' इत्यनुवृत्तौ ‘बहुलं छन्दसि ' इति ईडागमः। ग्रहिज्यादिना संप्रसारणम् । “ हृग्रहोर्भश्छन्दसि ' इति भकारः। निघातः । ह्वार्याणाम्। ‘ह्वृ कौटिल्ये,' । ॠहलोर्ण्यत् । आदिवृद्धिः । ' तित्स्वरितम्' इति स्वरितत्वम् । पुरु । पॄ पालनपूरणयोः' ।' पृभिदिव्यधिगृधिधृषिदृशिभ्यः' इति कुप्रत्ययः । ‘उदोष्ठ्यपूर्वस्य ' इत्युत्वम् । प्रत्ययस्वरेण अन्तोदात्तत्वम् । असि । 'यद्वृत्तान्नित्यम्' इति न निघातः ॥

अध॑ स्म॒ यस्या॒र्चयः॑ स॒म्यक्सं॒यन्ति॑ धू॒मिनः॑ ।

यदी॒मह॑ त्रि॒तो दि॒व्युप॒ ध्माते॑व॒ धम॑ति॒ शिशी॑ते ध्मा॒तरी॑ यथा ॥५

अध॑ । स्म॒ । यस्य॑ । अ॒र्चयः॑ । स॒म्यक् । स॒म्ऽयन्ति॑ । धू॒मिनः॑ ।

यत् । ई॒म् । अह॑ । त्रि॒तः । दि॒वि । उप॑ । ध्माता॑ऽइव । धम॑ति । शिशी॑ते । ध्मा॒तरि॑ । य॒था॒ ॥५

अध । स्म । यस्य । अर्चयः । सम्यक् । सम्ऽयन्ति । धूमिनः ।

यत् । ईम् । अह । त्रितः । दिवि । उप । ध्माताऽइव । धमति । शिशीते । ध्मातरि । यथा ॥५

“अध “स्म अपि च “धूमिनः धूमवतः “यस्य अग्नेः "अर्चयः अर्चींषि “सम्यक् शोभनं “संयन्ति सर्वतः प्राप्नुवन्ति “त्रितः त्रिषु स्थानेषु ततो व्याप्तः त्रीणि स्थानानि वा अतीत्य “दिवि अन्तरिक्षे “यत् यदा “ईम् अयमात्मानम् “उप “धमति उपवर्धयति तदा ज्वालाः सर्वतो निर्गच्छन्तीत्यर्थः । कथमिव । “ध्मातेव । कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत्स्वात्मानं वर्धयतीत्यर्थः । किंच “ध्मातरि "यथा । यथा ध्मातृसमीपे विद्यमानोऽग्निस्तेन ध्मायमानः स आत्मानं “शिशीते तीक्ष्णीकरोति तद्वत्स्वयमेव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः। “अह इति पादपूरणः ॥ यन्ति । इण् गतौ । यच्छब्दयोगन्निघाताभावः । धमति । ‘ ध्मा शब्दाग्निसंयोगयोः'। पाघ्रादिना धमादेशः । पूर्ववत् निघाताभावः । शिशीते। शो तनूकरणे'। व्यत्ययेनात्मनेपदी। ‘ श्लौ' इत्यनुवर्तमाने ‘ बहुलं छन्दसि' इति विकरणस्य श्लुः । ‘ आदेच उपदेशेऽशिति' इति आत्वम् । ‘श्लौ' इति द्विर्वचनम् । ‘ बहुलं छन्दसि' इत्यभ्यासस्य इत्वम् । ‘उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायाम् आतः ‘ई हल्यघोः' इति ईत्वम् । तिङ उत्तरत्वान्निघाताभावः ॥

तवा॒हम॑ग्न ऊ॒तिभि॑र्मि॒त्रस्य॑ च॒ प्रश॑स्तिभिः ।

द्वे॒षो॒युतो॒ न दु॑रि॒ता तु॒र्याम॒ मर्त्या॑नाम् ॥६

तव॑ । अ॒हम् । अ॒ग्ने॒ । ऊ॒तिऽभिः॑ । मि॒त्रस्य॑ । च॒ । प्रश॑स्तिऽभिः ।

द्वे॒षः॒ऽयुतः॑ । न । दुः॒ऽइ॒ता । तु॒र्याम॑ । मर्त्या॑नाम् ॥६

तव । अहम् । अग्ने । ऊतिऽभिः । मित्रस्य । च । प्रशस्तिऽभिः ।

द्वेषःऽयुतः । न । दुःऽइता । तुर्याम । मर्त्यानाम् ॥६

हे अग्ने “अहं "मित्रस्य सर्वेषां मित्रभूतस्य “तव "ऊतिभिः युष्मत्कर्तृकरक्षणैः युष्मत्प्रशस्तिभिः “च अस्मत्कृतैः स्तोत्रैश्च मर्त्यानां शत्रुभूतानां मनुष्याणां "दुरिता दुरितानि तत्कर्तृकाणि पापसाधन कर्माणि “द्वेषोयुतो “न द्वेषयुक्तान् शत्रूनिव "तुर्याम तरेयम् । अयमर्थः । त्वद्रक्षणैस्त्वत्संबन्धिस्तुतिभिश्च बाह्याभ्यन्तरशत्रून् तरेयमित्यर्थः ॥ ऊतिभिः। अव रक्षणे'। क्तिन् । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ' इति ऊठ्। ‘उतियूतिजूतिसातिहेतिकीर्तयश्च' इति अन्तोदात्तत्वेन निपातितः। प्रशस्तिभिः । ‘ शंसु स्तुतौ । क्तिन् । कृदुत्तरपदप्रकृतिस्वरापवादत्वेन ‘तादौ च निति कृत्यतौ ' इति गतेः प्रकृतिस्वरत्वम् । द्वेषोयुतः । ‘ द्विष अप्रीतौ । भावेऽसुन्प्रत्ययः । ‘ यु मिश्रणे' । कर्तरि क्विप् । तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । तुर्याम । ‘तॄ प्लवनतरणयोः'। प्रार्थनायां लिङ् । यासुट् । ‘लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः । ‘ बहुलं छन्दसि ' इति शपो लुक् । उदोष्ठ्यपूर्वस्य ‘ बहुलं छन्दसि ' इति उत्वम् । यासुडागमस्योदात्तत्वाच्छेषनिघातः । ‘ °अपादादौ ' इति प्रतिषेधान्निघाताभावः ॥

तं नो॑ अग्ने अ॒भी नरो॑ र॒यिं स॑हस्व॒ आ भ॑र ।

स क्षे॑पय॒त्स पो॑षय॒द्भुव॒द्वाज॑स्य सा॒तय॑ उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥७

तत् । न॒ः । अ॒ग्ने॒ । अ॒भि । नरः॑ । र॒यिम् । स॒ह॒स्व॒ः । आ । भ॒र॒ ।

सः । क्षे॒प॒य॒त् । सः । पो॒ष॒य॒त् । भुव॑त् । वाज॑स्य । सा॒तये॑ । उ॒त । ए॒धि॒ । पृत्ऽसु । न॒ः । वृ॒धे ॥७

तत् । नः । अग्ने । अभि । नरः । रयिम् । सहस्वः । आ । भर ।

सः । क्षेपयत् । सः । पोषयत् । भुवत् । वाजस्य । सातये । उत । एधि । पृत्ऽसु । नः । वृधे ॥७

हे “अग्ने “सहस्वः बलवन् “नरः हविषां नेता त्वम् अस्माकं “तं “रयिं लोके प्रसिद्धं पश्वादिलक्षणं धनम् “अभि “आ “भर आभिमुख्येनाहर । पूर्वोक्तः “सः अग्निः “क्षेपयत् । अस्मदीयान् शत्रून् क्षेपयतु । “सः अग्निः “पोषयत् अस्मान् पोषयतु । “वाजस्य

अन्नस्य "सातये लाभाय “भुवत् भवतु । "उत अपि च हे अग्ने "पृत्सु पृतनासु युद्धेषु “नः अस्माकं “वृधे समृद्धये “एधि भव । संग्रामे शत्रुविजयार्थं स त्वं समृद्धिं कुर्वित्यर्थः ॥ सहस्वः । षह मर्षणे ' । असुन् । सहत्यनेन शत्रूनिति सहो बलम् । मतुप् । ‘ मादुपधायाः' इति वत्वम् । “ मतुवसो रुः संबुद्धौ छन्दसि ' इति रुत्वम् । आमन्त्रितस्य च ' इति निघातः । क्षेपयत् । ‘ क्षिप प्रेरणे'। णिजन्तात् लेट् । इतश्च लोपः । ‘लेटोऽडाटौ ' इयडागमः । शप् गुणायादेशौ पररूपत्वं च । पोषयत् ।' पुष पुष्टौ ' । भुवत् । ‘ भू सत्तायाम् ' । भूसुवोस्तिङि' इति गुणप्रतिषेधः । उवङ् । एधि । “अस भुवि । ' ष्वसोरेद्धावभ्यासलोपश्च' इति एत्वम् । तस्यासिद्धत्वात् ‘हुझल्भ्यो हेर्धिः' इति धिरादेशः । निघातः । पृत्सु । ‘पदादिषु' इत्यादिना पृतनाशब्दस्य पृदादेशः । सावेकाच्त्वात् अन्तोदात्तत्वम् ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं ५.१०



दे. अग्निः। अनुष्टुप्, ४, ७ पङ्क्तिः।

---

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।

प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥१॥

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।

त्वे असुर्यमारुहत्क्राणा मित्रो न यज्ञियः ॥२॥

त्वं नो अग्न एषां गयं पुष्टिं च वर्धय ।

ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥३॥

ये अग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।

शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥४॥

तव त्ये अग्ने अर्चयो भ्राजन्तो यन्ति धृष्णुया ।

परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥५॥

नू नो अग्न ऊतये सबाधसश्च रातये ।

अस्माकासश्च सूरयो विश्वा आशास्तरीषणि ॥६॥

त्वं नो अग्ने अङ्गिर स्तुत स्तवान आ भर ।

होतर्विभ्वासहं रयिं स्तोतृभ्य स्तवसे च न उतैधि पृत्सु नो वृधे ॥७॥

**सायणभाष्यम्**

•अग्न ओजिष्ठम् ' इति सप्तर्चं दशमं सूक्तम् । ऋष्यादि विनियोगश्च पूर्ववत् । चतुर्थीसप्तम्यौ पङ्क्ती । ‘ अग्न ओजिष्ठमन्त्याचतुर्थ्यौ च ' इत्यनुक्रान्तम् ॥

अग्न॒ ओजि॑ष्ठ॒मा भ॑र द्यु॒म्नम॒स्मभ्य॑मध्रिगो ।

प्र नो॑ रा॒या परी॑णसा॒ रत्सि॒ वाजा॑य॒ पन्था॑म् ॥१

अग्ने॑ । ओजि॑ष्ठम् । आ । भ॒र॒ । द्यु॒म्नम् । अ॒स्मभ्य॑म् । अ॒ध्रि॒गो॒ इत्य॑ध्रिऽगो ।

प्र । न॒ः । रा॒या । परी॑णसा । रत्सि॑ । वाजा॑य । पन्था॑म् ॥१

अग्ने । ओजिष्ठम् । आ । भर । द्युम्नम् । अस्मभ्यम् । अध्रिगो इत्यध्रिऽगो ।

प्र । नः । राया । परीणसा । रत्सि । वाजाय । पन्थाम् ॥१

हे “अग्ने “ओजिष्ठं बलवत्तमं “द्युम्नम् । द्योतते कटकमुकुटादिरूपेण सर्वत्र प्रकाशते इति द्युम्नं धनम् । “अस्मभ्यम् “आ “भर आहर । हे “अध्रिगो अधृतगमन। अधृतमप्रतिहतं गमनं यस्येति अधृता अनिवारिता गावो रश्मयो यस्येति वा अधृतगुः अध्रिगुः । तस्य संबोधनम् । “नः अस्मान् “परीणसा परितो व्यापकेन “राया धनेन “प्र प्रकर्षेण योजय । “वाजाय अन्नलाभाय “पन्थां पन्थानमन्नस्य मत्समीपप्राप्तिसाधनं मार्गं “रत्सि विलिख । कुर्वित्यर्थः ॥ ओजिष्ठम् । “ उब्ज आर्जवे '। ‘ उब्जेर्बले बलोपश्च' इत्यसुन् बलोपश्च । गुणः । ओजः । तदस्यास्ति' इत्यर्थे ' अस्मायामेधा' इत्यादिना विनिः । ‘अतिशायने' इति इष्ठन्। विन्मतोर्लुक् । ‘ टेः' इति टिलोपः। नित्त्वादाद्युदात्तः । द्युम्नम् । ‘ द्युत दीप्तौ ' इत्यस्माद्धातोः ' सुम्नद्युम्ननिम्न ' इत्यादिना नक्प्रत्ययो मकारश्चान्तादेशो निपात्यते । प्रत्ययस्वरेणान्तोदात्तः । अध्रिगो । अधृतशब्दस्य अध्र्यादेशः । गोशब्दस्योपसर्जनह्रस्वत्वम् । आमन्त्रितस्य निघातः । परीणसा । ‘णस कौटिल्ये' । अत्र व्याप्त्यर्थो धातूनामनेकार्थत्वात् । अस्मात् संपदादिलक्षणो भावे क्विप् । परि प्राप्तं नस् व्यापनं यस्य तत्तथोक्तम् ।' उपसर्गादसमासेऽपि ' इति णत्वम् । अत्र प्रापणक्रियया युक्तस्य परेर्णसतिं प्रत्युपसर्गसंज्ञा नास्ति ‘यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञाः ' (पा. सू. १. ४. ६०. ३) इति न्यायात् । अतः कथं णत्वम् । एवं तर्हि

' उपसर्गाद्बहुलम् इति वचनात् णसो णत्वं भविष्यति ।' निपातस्य च ' इति पूर्वपदस्य दीर्घः । ‘ बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम् । रत्सि ।' रद विलेखने ' । भौवादिकः । 'बहुलं छन्दसि ' इति शपो लुक् । पादादित्वान्निघाताभावः । पन्थाम् । द्वितीयैकवचने ‘ इतोऽत् सर्वनामस्थाने ' इत्यत् । नकारलोपश्छान्दसः । 'पथिमथोः सर्वनामस्थाने ' इत्याद्युदात्तत्वम् ॥

त्वं नो॑ अग्ने अद्भुत॒ क्रत्वा॒ दक्ष॑स्य मं॒हना॑ ।

त्वे अ॑सु॒र्य१॒॑मारु॑हत्क्रा॒णा मि॒त्रो न य॒ज्ञिय॑ः ॥२

त्वम् । न॒ः । अ॒ग्ने॒ । अ॒द्भु॒त॒ । क्रत्वा॑ । दक्ष॑स्य । मं॒हना॑ ।

त्वे इति॑ । अ॒सु॒र्य॑म् । आ । अ॒रु॒ह॒त् । क्रा॒णा । मि॒त्रः । न । य॒ज्ञियः॑ ॥२

त्वम् । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ।

त्वे इति । असुर्यम् । आ । अरुहत् । क्राणा । मित्रः । न । यज्ञियः ॥२

हे "अग्ने “अद्भुत सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत “त्वं “नः अस्माकं "क्रत्वा कर्मणा अस्मत्कृतेन यज्ञादिव्यापारेण प्रीतः सन् 'दक्षस्य बलस्य धनस्य वा “मंहना मंहनं नाम दानं कुर्विति शेषः । यतः कारणात् “त्वे त्वयि “असुर्यम् असुरघ्नं बलम् “आरुहत् आरूढं अतः “मित्रो “न सूर्य इव "यज्ञियः यज्ञार्हस्त्वं “क्राणा यज्ञधातुकराक्षसापनोदनलक्षणानि कर्माणि कुर्वाणो भव ॥ अद्भुत । आमन्त्रितस्याद्युदात्तत्वम् । क्रत्वा । ‘ डुकृञ् करणे । कृञः कतुः' इति कतुप्रत्ययः । ककारो गुणवृद्धिप्रतिषेधार्थः । यणादेशः । क्रतुः कर्म । तृतीयैकवचने ' जसादिषु वावचनम् ' इति वचनान्नाभावाभावः । दक्षस्य । ‘ दक्ष गतिहिंसनयोः '। दक्ष्यन्ते हिंस्यन्तेऽनेन शत्रव इति दक्षं बलम् । ‘ करणाधिकरणयोश्च ' इति घञ् । ञित्वात् आद्युदात्तः । मंहना। मंहतिर्दानकर्मा । ‘सुपां सुलुक् इत्याकारादेशः । त्वे । ‘सुपां सुलुक् ' इत्यादिना ङेः शेआदेशः । सुबादेशत्वादनुदात्तः । त्वशब्दः प्रत्ययस्वरेणान्तोदात्तः । ‘ एकादेश उदात्तेनोदात्तः ' इत्येकादेशस्योदात्तत्वम् । आरुहत् । रुहेर्धातोर्लुङि ‘ कृमृदृरुहिभ्यश्छन्दसि ' इति च्लेरङादेशः । ङित्त्वाद्गुणाभावः । क्राणा । डुकृञ् करणे ' । शानच् । ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् । यणादेशः । ‘ सुपां सुलुक्° ' इत्यात्वम् । चितः ' इत्यन्तोदात्तः । यज्ञियः । यज्ञमर्हतीत्यस्मिन्नर्थे • यज्ञर्त्विग्भ्यां घखञौ ' इति घः । प्रत्ययस्वरेणान्तोदात्तः ॥

त्वं नो॑ अग्न एषा॒ं गयं॑ पु॒ष्टिं च॑ वर्धय ।

ये स्तोमे॑भि॒ः प्र सू॒रयो॒ नरो॑ म॒घान्या॑न॒शुः ॥३

त्वम् । न॒ः । अ॒ग्ने॒ । ए॒षा॒म् । गयम् । पु॒ष्टिम् । च॒ । व॒र्ध॒य॒ ।

ये । स्तोमे॑भिः । प्र । सू॒रयः॑ । नरः॑ । म॒घानि॑ । आ॒न॒शुः ॥३

त्वम् । नः । अग्ने । एषाम् । गयम् । पुष्टिम् । च । वर्धय ।

ये । स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥३

हे “अग्ने “त्वम् “एषां यज्ञर्त्विग्भ्यां नः त्वत्स्तावकानामस्माकं “गयम् । गम्यते निवासायेति गयं गृहं गीयते स्तूयत इति वा गयं धनम् । “पुष्टिं “च गवादिविषयां पुष्टिं च “वर्धय वृद्धिं प्रापय । "ये लोके प्रसिद्धाः “सूरयः लब्धवर्णाः “नरः स्तोतारो मनुष्याः “स्तोमेभिः स्तोमैः स्तोत्रैः “मघानि मंहनीयानि गवादिधनानि यथा “प्र “आनशुः प्राप्नुवन् तद्वद्वयमपीत्यर्थः ॥ गयम् । गृहपक्षे गमेः ' अघ्न्यादयश्च ' इति यत्प्रत्ययान्तो मकारलोपश्च निपात्यते । धनपक्षे ‘ गा स्तुतौ '। अस्माद्यत्प्रत्ययः । ह्रस्वत्वम् ।' यतोऽनावः' इत्याद्युदात्तत्वम् । पुष्टिम् । ‘ पुष पुष्टौ ' । स्त्रियां क्तिन् । छान्दसत्वादन्तोदात्तत्वम् । स्तोमेभिः । 'ष्टुञ् स्तुतौ '। ' अर्तिस्तुसुहु° । इत्यादिना मन् । गुणः । नित्त्वादाद्युदात्तः । आनशुः । अशू व्याप्तौ । लिट् । द्विर्वचनम् । हलादिशेषः । अत आदेः' इत्यात्वम् । ‘अश्नोतेश्च ' इति नुडागमः । निघातः ॥

ये अ॑ग्ने चन्द्र ते॒ गिर॑ः शु॒म्भन्त्यश्व॑राधसः ।

शुष्मे॑भिः शु॒ष्मिणो॒ नरो॑ दि॒वश्चि॒द्येषां॑ बृ॒हत्सु॑की॒र्तिर्बोध॑ति॒ त्मना॑ ॥४

ये । अ॒ग्ने॒ । च॒न्द्र॒ । ते॒ । गिरः॑ । शु॒म्भन्ति॑ । अश्व॑ऽराधसः ।

शुष्मे॑भिः । शु॒ष्मिणः॑ । नरः॑ । दि॒वः । चि॒त् । येषा॑म् । बृ॒हत् । सु॒ऽकी॒र्तिः । बोध॑ति । त्मना॑ ॥४

ये । अग्ने । चन्द्र । ते । गिरः । शुम्भन्ति । अश्वऽराधसः ।

शुष्मेभिः । शुष्मिणः । नरः । दिवः । चित् । येषाम् । बृहत् । सुऽकीर्तिः । बोधति । त्मना ॥४

हे “अग्ने “चन्द्र सर्वेषां प्राणिनामाह्लादकर “ये “नरः “ते “गिरः त्वत्संबन्धिस्तोत्ररूपा वाचः “शुम्भन्ति शोभनाः कुर्वन्ति ते अश्वराधसः अश्वधना भवन्ति । एतेन सर्वसमृद्धिरुपलक्ष्यते । किंच । “शुष्मिणः बलवन्तः सन्तः “शुष्मेभिः शुष्मैः स्वकीयैर्बलैः सत्त्वैः शत्रुशोषका भवन्ति । “येषां त्वत्संबन्धिनं स्तवं कुर्वतां “दिवश्चित् आकाशादपि “बृहत् महती “सुकीर्तिः भवति । सर्वदिगन्तरालवर्तिनी कीर्तिर्भवतीत्यर्थः । एवंविधं त्वां गयः “त्मना आत्मना स्वयमेव “बोधति बोधयति ॥ शुम्भन्ति । ‘शुभ शुम्भ दीप्तौ । तुदादिः । पादादित्वान्निघाताभावः । लसार्वधातुकानुदात्तत्वे प्राप्ते सति शिष्टत्वाद्विकरणस्वर एव । अश्वराधसः । ‘ अशू व्याप्तौ । “ अशुपुषि ' इत्यादिना क्वन् । अश्नुते व्याप्नोत्यध्वानमित्यश्वः । नित्त्वादाद्युदात्तः । ‘राध साध संसिद्धौ । असुन् । राध्नुवन्ति साधयन्त्यनेन धर्मदीनीति राधो धनम् । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । बृहत् । बृह बृहि वृद्धौ'। शतृ । ङीपो लोपश्छान्दसः । प्रत्ययस्वरः । बोधति । 'बुध अवगमने' । ण्यन्तात् शपि कृते तस्य छन्दस्युभयथा' इति सार्वधातुकसंज्ञायां णिलोपः । ‘ यद्वृत्तान्नित्यम्' इति निघाताभावः । धातुस्वरेणाद्युदात्तः । त्मना । मन्त्रेष्वाङयादेरात्मनः' इत्याकारलोपः ॥

तव॒ त्ये अ॑ग्ने अ॒र्चयो॒ भ्राज॑न्तो यन्ति धृष्णु॒या ।

परि॑ज्मानो॒ न वि॒द्युत॑ः स्वा॒नो रथो॒ न वा॑ज॒युः ॥५

तव॑ । त्ये । अ॒ग्ने॒ । अ॒र्चय॑ः । भ्राज॑न्तः । य॒न्ति॒ । धृ॒ष्णु॒ऽया ।

परि॑ऽज्मानः । न । वि॒ऽद्युत॑ः । स्वा॒नः । रथ॑ः । न । वा॒ज॒ऽयुः ॥५

तव । त्ये । अग्ने । अर्चयः । भ्राजन्तः । यन्ति । धृष्णुऽया ।

परिऽज्मानः । न । विऽद्युतः । स्वानः । रथः । न । वाजऽयुः ॥५

हे "अग्ने “धृष्णुया धृष्णवोऽत्यन्तप्रगल्भाः “भ्राजन्तः दीप्यमानाः “त्ये ते प्रसिद्धाः “तव अर्चयः त्वदीया रश्मयः "यन्ति सर्वतो गच्छन्ति । कथमिव । “परिज्मानः परितो गन्त्र्यः सर्वतो व्याप्ताः “विद्युतः “न अचिरप्रभा इव । अनेन प्रकाशातिशय उक्तः । “स्वानः शब्दायमानः “रथो “न रथ इव । अनेनार्चिषां स्वनाधिक्यमुक्तम् । “वाजयुः न अन्नकाम इवान्नार्थं युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः । अनेनाहुतिविषयोऽभिलाष उक्तः ॥ यन्ति । ‘ इण् गतौ ' । धृष्णुया । ञिधृषा प्रागल्भ्ये'।' त्रसिगृधिधृषि° ' इत्यादिना क्नुप्रत्ययः । ‘ आदितश्च' (पा. सू. ७. २. १६ ) इति । इट्प्रतिषेधः । बहुवचने ‘सुपां सुलुक्' इत्यादिना याजादेशः । ‘ चितः' इत्यन्तोदात्तत्वम् । परिज्मानः । ‘ अज व्रज गतौ ' । परिपूर्वाद्धातोः ‘ अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । अकारलोपः छान्दसः । नित्त्वादाद्युदात्तः । वाजयुः । वाजमात्मन इच्छति इति क्यच् । 'न छन्दस्य पुत्रस्य' इति ईत्वदीर्घयोः प्रतिषेधः । ‘क्याच्छन्दसि' इति उप्रत्ययः ॥

नू नो॑ अग्न ऊ॒तये॑ स॒बाध॑सश्च रा॒तये॑ ।

अ॒स्माका॑सश्च सू॒रयो॒ विश्वा॒ आशा॑स्तरी॒षणि॑ ॥६

नु । न॒ः । अ॒ग्ने॒ । ऊ॒तये॑ । स॒ऽबाध॑सः । च॒ । रा॒तये॑ ।

अ॒स्माका॑सः । च॒ । सू॒रय॑ः । विश्वा॑ः । आशा॑ः । त॒री॒षणि॑ ॥६

नु । नः । अग्ने । ऊतये । सऽबाधसः । च । रातये ।

अस्माकासः । च । सूरयः । विश्वाः । आशाः । तरीषणि ॥६

हे “अग्ने “नः अस्माकं “नु क्षिप्रम् “ऊतये रक्षायै भव । "सबाधसश्च दारिद्र्यनिमित्तबाधसहितस्य च "रातये धनानां दानाय भव । किंच “अस्माकासः आस्माकाः पुत्रमित्रादयः “सूरयः स्तोतारः "विश्वाः सर्वाः "आशाः दिशः “तरीषणि । तासां तरणे क्षमा भवन्तु ।

अथवा आशाः कामाः । अयमर्थः । स्वाभिलषितप्रशस्तसमस्तवस्तुसंपादनं कुर्वित्यर्थः ॥ सबाधसः । बाधेरसुन्। बाधसा सह वर्तत इति सबाधाः । 'वोपसर्जनस्थ' इति सहस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रातये ।'रा दाने' । क्तिन् । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इत्यन्तोदात्तः । अस्माकासः । ' तस्मिन्नणि च युष्माकास्माकौ ' इत्यणि कृतेऽस्माकादेशः । छान्दसत्वादणो लोपः । बहुवचने असुगागमः । षष्ठीबहुवचने मध्योदात्तत्वेन दृष्टत्वात्तथाविधमादेशमत्रापि कृतवानाचार्यः । विश्वाः । विशेः 'अशिप्रुषि°' इत्यादिना क्वन् । नित्त्वादाद्युदात्तः । तरीषणि । 'तॄ प्लवनतरणयोः ' । ' कृतॄभ्यामीषन' (उ. सू. ४. ४६६) इति ईषन् । बहुलवचनान्नलोपाभावः । अन्तोदात्तश्छान्दसः ॥

त्वं नों अग्ने अङ्गिरः स्तुतः स्तवा॑न् आ भ॑र ।

होत॑र्विभ्वा॒सहं॑ र॒यिं स्तो॒तृभ्य॒ः स्तव॑से च न उ॒तैधिं पृ॒त्सु नों वृ॒धे ॥७

त्वम् । न॒ः । अ॒ग्ने॒ । अ॒ङ्गि॒र॒ः । स्तु॒तः । स्तवा॑नः । आ । भ॒र॒ ।

होत॑ः । वि॒भ्व॒ऽसह॑म् । र॒यिम् । स्तो॒तृऽभ्य॑ः । स्तव॑से । च॒ । न॒ः । उ॒त । ए॒धि॒ । पृ॒त्ऽसु । न॒ः । वृ॒धे ॥७

त्वम् । नः । अग्ने । अङ्गिरः । स्तुतः । स्तवानः । आ । भर ।

होतः । विभ्वऽसहम् । रयिम् । स्तोतृऽभ्यः । स्तवसे । च । नः । उत । एधि । पृत्ऽसु । नः । वृधे ॥७

हे "अग्ने "अङ्गिरः । कार्यकारणयोरभेदोपचारादङ्गिरसां प्रकृतिभूतोऽप्यग्निरङ्गिरा इत्युच्यते । हे अङ्गिरः पूर्वैः महर्षिभिः "स्तुतः "स्तवानः इदानींतनैश्च स्तूयमानस्त्वं "विभ्वासहं महतामप्यभिभवितारम् । अभिभवहेतुत्वादभिभवितृ धनमुच्यते । "रयिं धनं "नः अस्माकम् "आ "भर आहर । हे "होतः देवानामाह्वातः "स्तोतृभ्यः "नः अस्मभ्यं "स्तवसे स्तोतुं सामर्थ्यं च प्रयच्छ । "उत अपि च "पृत्सु युद्धेषु "नः अस्माकं "वृधे समृद्धये "एधि भव ॥ स्तवानः । ' ष्टुञ् स्तुतौ '। शानचि कर्मणि व्यत्ययेन शप्प्रत्यय आद्युदात्तश्च । विभ्वासहम् । संहितायां विभूनामिति षष्ठीबहुवचनस्य 'सुपाम्' इत्यादिना आकारादेशः । "तत्पुरुषे कृति बहुलम् इति षष्ठ्या अलुक् । पदकारास्तु विपूर्वाद्भवतेः अगागमम् 'अन्येषामपि दृश्यते' इति दीर्घत्वं च मत्वावग्रहं कुर्वन्ति । कृदुत्तरपदप्रकृतिस्वरत्वम् । स्तवसे ।' ष्टुञ् स्तुतौ '। तुमर्थेऽसेन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं ५.११



दे. अग्निः। जगती।

---

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥१॥
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥२॥
असम्मृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥३॥
अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥४॥
तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्धयन्ति च ॥५॥

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।

स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥६॥

**सायणभाष्यम्**

‘ जनस्य गोपाः' इति षड़ृचमेकादशं सूक्तमात्रेयस्य सुतंभरस्यार्षं जागतमाग्नेयम् । तथा चानुक्रान्तं - 'जनस्य षट् सुतंभरो जागतम्' इति । प्रातरनुवाके आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः । ‘ जनस्य गोपास्त्वमग्न ऋतायवः ' (आश्व. श्रौ. ४. १३ ) इति ॥

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।

घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥१

जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुवितायं । नव्यसे ।

घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥१

जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुविताय । नव्यसे ।

घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥१

"जनस्य "गोपाः गोपायिता रक्षिता "जागृविः जागरणशीलः सदा प्रबुद्धः "सुदक्षः सुबलः सर्वैः श्लाघनीयबलः सः "अग्निः "नव्यसे नवतराय “सुविताय लोकानां कल्याणाय “अजनिष्ट जातः । “घृतप्रतीकः घृतेन प्रज्वलिताङ्गः “बृहता महता "दिविस्पृशा अभ्रंलिहेन तेजसा युक्तः "शुचिः शुद्धः एवंविधोऽग्निः "भरतेभ्यः ऋत्विग्भ्यस्तदर्थं “द्युमत् दीप्तिमत् यथा भवति तथा “वि “भाति प्रकाशते ॥ गोपाः । ‘ गुपू रक्षणे '। आयप्रत्ययः । गोपायतेः क्विप् । परत्वादतो लोपः । अत्र परत्वादपृक्तलोपे कृते वर्णाश्रयत्वात् प्रत्ययलक्षणाभावेन यलोपो न स्यात् । ‘ लोपो व्योर्वलि:' इति प्रथमं लोपग्रहणात् ज्ञापकाद्यलोप एव भवति । लोपाजादेशस्य यलोपविधिं प्रति न स्थानिवद्भावः । प्रत्ययस्वरः । जागृविः । ‘ जागृ निद्राक्षये '। ‘ जॄशॄस्तॄजागृभ्यः क्विन् ' इति क्विन्प्रत्ययः । ‘ जाग्रोऽविचिण्णल्ङित्सु ' इति प्रतिषेधाद्गुणाभावः । नित्त्वादाद्युदात्तः । सुदक्षः । ‘ आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । सुविताय । ‘ तन्वादीनां छन्दस्युपसंख्यानम्' इति सोरुवङादेशः । ‘ सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । नव्यसे । नवशब्दादतिशायनेऽर्थे ईयसुन्प्रत्ययः । ईकारलोपश्छान्दसः । अतो लोपः । आद्युदात्तः । दिविस्पृशा । ‘ हृद्द्युभ्यां ङेरुपसंख्यानम्' इत्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । द्युमत् । ‘ह्रस्वनुड्भ्यां मतुप् ' इति ह्रस्वात्परस्य मतुपोऽन्तोदात्तत्वम् ॥

य॒ज्ञस्य॑ के॒तुं प्र॑थ॒मं पु॒रोहि॑तम॒ग्निं नर॑स्त्रिषध॒स्थे समी॑धिरे ।

इन्द्रे॑ण दे॒वैः स॒रथं॒ स ब॒र्हिषि॒ सीद॒न्नि होता॑ य॒जथा॑य सु॒क्रतुः॑ ॥२

य॒ज्ञस्य॑ । के॒तुम् । प्र॒थ॒मम् । पु॒रःऽहि॑तम् । अ॒ग्निम् । नरः॑ । त्रि॒ऽस॒ध॒स्थे । सम् । ई॒धि॒रे॒ ।

इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । सः । ब॒र्हिषि॑ । सीद॑त् । नि । होता॑ । य॒जथा॑य । सु॒ऽक्रतुः॑ ॥२

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । अग्निम् । नरः । त्रिऽसधस्थे । सम् । ईधिरे ।

इन्द्रेण । देवैः । सऽरथम् । सः । बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥२

“नरः ऋत्विजः "यज्ञस्य यागस्य "केतुं प्रज्ञापकं "पुरोहितं यजमानैः पुरस्कृतम् "इन्द्रेण “देवैः च "सरथं तेषां मान्यत्वात् समानरथम् "अग्निं "त्रिषधस्थे त्रिस्थाने विहारप्रदेशे "प्रथमं “समीधिरे समैन्धत । "सुक्रतुः शोभनकर्मा “होता देवानामाह्वाता “सः अग्निः "बर्हिषि बर्हिर्युक्ते तस्मिन् स्थाने "यजथाय यज्ञाय "नि “सीदत् प्रतिष्ठितोऽभवदिति यावत् ॥ केतुम् । ‘ कित ज्ञाने ' । औणादिक उप्रत्ययः । अन्तोदात्तः । पुरोहितम् । “पुरोऽव्ययम्' इति गतिसंज्ञायां ‘ गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । त्रिषधस्थे । आहवनीयादिलक्षणेन त्रिप्रकारेणानेन सह तिष्ठतीति त्रिषधस्थः । कप्रत्ययः । ‘ सध मादस्थयोश्छन्दसि' इति सधादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । सीदत् । सदेः पाघ्रादिना सीदादेशः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ' इत्यडभावः । पादादित्वान्निघाताभावः । यजथाय । यजेरौणादिकोऽथप्रत्ययः । प्रत्ययस्वरेण मध्योदात्तः ॥

अस॑म्मृष्टो जायसे मा॒त्रोः शुचि॑र्म॒न्द्रः क॒विरुद॑तिष्ठो वि॒वस्व॑तः ।

घृ॒तेन॑ त्वावर्धयन्नग्न आहुत धू॒मस्ते॑ के॒तुर॑भवद्दि॒वि श्रि॒तः ॥३

अस॑म्ऽमृष्टः । जा॒य॒से॒ । मा॒त्रोः । शुचिः॑ । म॒न्द्रः । क॒विः । उत् । अ॒ति॒ष्ठ॒ः । वि॒वस्व॑तः ।

घृ॒तेन॑ । त्वा॒ । अ॒व॒र्ध॒य॒न् । अ॒ग्ने॒ । आ॒ऽहु॒त॒ । धू॒मः । ते॒ । के॒तुः । अ॒भ॒व॒त् । दि॒वि । श्रि॒तः ॥३

असम्ऽमृष्टः । जायसे । मात्रोः । शुचिः । मन्द्रः । कविः । उत् । अतिष्ठः । विवस्वतः ।

घृतेन । त्वा । अवर्धयन् । अग्ने । आऽहुत । धूमः । ते । केतुः । अभवत् । दिवि । श्रितः ॥३

हे "अग्ने "मात्रोः अरण्योः । स्वजनननिमित्तत्वात् अरणी मातरावित्युच्येते । ताभ्याम् "असंमृष्टः अबाधित एव "जायसे प्रादुर्भूतो भवसि । "मन्द्रः सर्वैः स्तुत्यः "कविः क्रान्तः सर्वत्र व्याप्तः । अथवा मेधावी “शुचिः त्वं "विवस्वतः अग्निहोत्राद्यर्थं गृहे विशेषेण वसतः यजमानात् “उदतिष्ठः उदितोऽभवः । पूर्वे महर्षयः "त्वा त्वां “घृतेन “अवर्धयन् वृद्धिमनयन् । हे “आहुत आहुतिभिर्हुत “ते

तव "दिवि अन्तरिक्षे "श्रितः व्याप्तः “धूमः "केतुः प्रज्ञापकः "अभवत् । अग्न्यनुमापकत्वात् धूमस्य ॥ मात्रोः । उदात्तयणो हल्पूर्वात् ' इति विभक्तेरुदात्तत्वम् । मन्द्रः । ‘ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । अत्र स्तुत्यर्थादस्मात् ' स्फायितञ्चि° ' इत्यादिना रक् । अन्तोदात्तः । कविः । क्रमेः ‘इन् सर्वधातुभ्यः ' इति इन्प्रत्ययः । बाहुलकत्वात् मकारस्य वत्वं रेफलोपश्च । व्यत्ययेनान्तोदात्तत्वम् । उदतिष्ठः । उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः । विवस्वतः। विपूर्वाद्वसतेः संपदादिलक्षणो भावे क्विप् । ‘ तदस्यास्ति° ' इति मतुप् । ' मादुपधायाश्च° ' इति वत्वम् । मतुपोऽनुदात्तत्वाद्धातुस्वरः ॥

अ॒ग्निर्नो॑ य॒ज्ञमुप॑ वेतु साधु॒याग्निं नरो॒ वि भ॑रन्ते गृ॒हेगृ॑हे ।

अ॒ग्निर्दू॒तो अ॑भवद्धव्य॒वाह॑नो॒ऽग्निं वृ॑णा॒ना वृ॑णते क॒विक्र॑तुम् ॥४

अ॒ग्निः । न॒ः । य॒ज्ञम् । उप॑ । वे॒तु॒ । सा॒धु॒ऽया । अ॒ग्निम् । नर॑ः । वि । भ॒र॒न्ते॒ । गृ॒हेऽगृ॑हे ।

अ॒ग्निः । दू॒तः । अ॒भ॒व॒त् । ह॒व्य॒ऽवाह॑नः । अ॒ग्निम् । वृ॒णा॒नाः । वृ॒ण॒ते॒ । क॒विऽक्र॑तुम् ॥४

अग्निः । नः । यज्ञम् । उप । वेतु । साधुऽया । अग्निम् । नरः । वि । भरन्ते । गृहेऽगृहे ।

अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निम् । वृणानाः । वृणते । कविऽक्रतुम् ॥४

“साधुया सर्वपुरुषार्थानां साधकः "अग्निर्नो "यज्ञम् अस्मदीयं यागं प्रति "उप "वेतु आगच्छतु । “नरः मनुष्याः "गृहेगृहे अनुगृहम् "अग्निं "वि “भरन्ते विहरन्ति विहरणं कुर्वन्तीत्यर्थः । “हव्यवाहनः हव्यानां हविषां वोढा "अग्निर्दूतः देवानां दूतः "अभवत् । "वृणानाः संभजमानाः सन्तः "कविक्रतुं क्रान्तयज्ञम् "अग्निं "वृणते संभजन्ते ॥ साधुया । ‘ सुपां सुलुक् ' इत्यादिना विभक्तेर्यादेशः ॥

तुभ्ये॒दम॑ग्ने॒ मधु॑मत्तमं॒ वच॒स्तुभ्य॑ं मनी॒षा इ॒यम॑स्तु॒ शं हृ॒दे ।

त्वां गिर॒ः सिन्धु॑मिवा॒वनी॑र्म॒हीरा पृ॑णन्ति॒ शव॑सा व॒र्धय॑न्ति च ॥५

तुभ्य॑ । इ॒दम् । अ॒ग्ने॒ । मधु॑मत्ऽतमम् । वच॑ः । तुभ्य॑म् । म॒नी॒षा । इ॒यम् । अ॒स्तु॒ । शम् । हृ॒दे ।

त्वाम् । गिर॑ः । सिन्धु॑म्ऽइव । अ॒वनी॑ः । म॒हीः । आ । पृ॒ण॒न्ति॒ । शव॑सा । व॒र्धय॑न्ति । च॒ ॥५

तुभ्य । इदम् । अग्ने । मधुमत्ऽतमम् । वचः । तुभ्यम् । मनीषा । इयम् । अस्तु । शम् । हृदे ।

त्वाम् । गिरः । सिन्धुम्ऽइव । अवनीः । महीः । आ । पृणन्ति । शवसा । वर्धयन्ति । च ॥५

हे “अग्ने "तुभ्य तुभ्यं त्वदर्थं "मधुमत्तमम् अत्यन्तं मधुरम् “इदं "वचः क्रियते । “हृदे हृदि "शं सुखं कुर्वती “इयं "मनीषा स्तुतिः “तुभ्यम् "अस्तु । “गिरः स्तुतिरूपा वाचः "त्वाम् “आ “पृणन्ति पूरयन्ति । "शवसा बलेन "वर्धयन्ति च । कथमिव । "महीः महत्यः "अवनीः अवन्यः नद्यः “सिन्धुमिव समुद्रमिव ।।

त्वाम॑ग्ने॒ अङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ्छिश्रिया॒णं वने॑वने ।

स जा॑यसे म॒थ्यमा॑न॒ः सहो॑ म॒हत्त्वामा॑हु॒ः सह॑सस्पु॒त्रम॑ङ्गिरः ॥६

त्वाम् । अ॒ग्ने॒ । अङ्गि॑रसः । गुहा॑ । हि॒तम् । अनु॑ । अ॒वि॒न्द॒न् । शि॒श्रि॒या॒णम् । वने॑ऽवने ।

सः । जा॒य॒से॒ । म॒थ्यमा॑नः । सहः॑ । म॒हत् । त्वाम् । आ॒हुः॒ । सह॑सः । पु॒त्रम् । अ॒ङ्गि॒रः॒ ॥६

त्वाम् । अग्ने । अङ्गिरसः । गुहा । हितम् । अनु । अविन्दन् । शिश्रियाणम् । वनेऽवने ।

सः । जायसे । मथ्यमानः । सहः । महत् । त्वाम् । आहुः । सहसः । पुत्रम् । अङ्गिरः ॥६

हे "अग्ने "अङ्गिरसः ऋषयः "गुहा गुहायां “हितं निहितं निगूढं "वनेवने वृक्षेवृक्षे “शिश्रियाणम् आश्रितं "त्वाम् "अन्वविन्दन् अलभन्त । "महत् महता "सहः सहसा बलेन युक्तः “सः त्वं “मथ्यमानः “जायसे । हे "अङ्गिरः अङ्गिरसां प्रकृतिभूत “त्वां "सहसः “पुत्रम् “आहुः ॥ शिश्रियाणम् । श्रिञ् सेवायाम्' । लिटः कानच् । शपः श्लुः । ‘श्लौ' इति द्विर्वचनम् । इयङादेशः । चित्त्वादन्तोदात्तः ॥ ॥ ३ ॥

# ऋग्वेदः सूक्तं ५.१२



दे. अग्निः। त्रिष्टुप् ।

---

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥१॥
ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृन्धि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥२॥
कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥३॥
के ते अग्ने रिपवे बन्धनासः के पायवः सनिषन्त द्युमन्तः ।
के धासिमग्ने अनृतस्य पान्ति क आसतो वचसः सन्ति गोपाः ॥४॥
सखायस्ते विषुणा अग्न एते शिवासः सन्तो अशिवा अभूवन् ।
अधूर्षत स्वयमेते वचोभिरृजूयते वृजिनानि ब्रुवन्तः ॥५॥

यस्ते अग्ने नमसा यज्ञमीट्ट ऋतं स पात्यरुषस्य वृष्णः ।

तस्य क्षयः पृथुरा साधुरेतु प्रसर्स्राणस्य नहुषस्य शेषः ॥६॥

**सायणभाष्यम्**

‘ प्राग्नये बृहते ' इति षड्टचं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयम् । ‘ प्राग्नये' इत्यनुक्रान्तम् । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तम् । सूत्रितं च-- ‘ प्राग्नये बृहते प्र वेधसे कवये' (आश्व. श्रौ. ४. १३) इति ॥

प्राग्नयें बृह॒ते य॒ज्ञियां॑य ऋ॒तस्य॒ वृष्णे॒ असु॑राय॒ मन्म॑ ।

घृ॒तं न य॒ज्ञ आ॒स्ये॒३॒॑ सुपू॑तं॒ गिरं॑ भरे वृष॒भाय॑ प्रती॒चीम् ॥१

प्र । अ॒ग्नयें । बृ॒ह॒ते । य॒ज्ञियां॑य । ऋ॒तस्यं॑ । वृष्णें॑ । असु॑राय । मन्म॑ ।

घृ॒तम् । न । य॒ज्ञे । आ॒स्यें॑ । सुऽपू॑तम् । गिर॑म् । भ॒रे॒ । वृ॒ष॒भाय॑ । प्र॒ती॒चीम् ॥१

प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे । असुराय । मन्म ।

घृतम् । न । यज्ञे । आस्ये । सुऽपूतम् । गिरम् । भरे । वृषभाय । प्रतीचीम् ॥१

“बृहते सामर्थ्यातिशयेन महते “यज्ञियाय यज्ञार्हाय “ऋतस्य उदकस्य “वृष्णे वर्षित्रे ।। ऋतमित्युदकनामसु पाठात् । “असुराय बलवते ॥ असेरौणादिक उरन्प्रत्ययः ॥ “वृषभाय कामानां वर्षित्रे “अग्नये “मन्म ज्ञानसाधनं “प्रतीचीम् अभिमुखीं “गिरं स्तुतिरूपां वाचं “प्र “भरे प्रणयामि । कथमिव । “सुपूतं सम्यक्संस्कृतम् “आस्ये प्रहुतं “यज्ञे “घृतं “न घृतमिव । आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः ॥

ऋ॒तं चिं॑कित्व ऋ॒तमिच्चिं॑किद्ध्यृ॒तस्य॒ धारा॒ अनुं॑ तृन्धि पू॒र्वीः ।

नाहं या॒तुं सह॑सा॒ न द्व॒येन॑ ऋ॒तं स॑पाम्यरु॒षस्य॒ वृष्णः॑ ॥२

ऋ॒तम् । चि॒कि॒त्वः॒ । ऋ॒तम् । इत् । चि॒कि॒द्धि॒ । ऋ॒तस्यं॑ । धाराः॑ । अनुं॑ । तृ॒न्धि॒ । पू॒र्वीः ।

न । अ॒हम् । या॒तुम् । सह॑सा । न । द्व॒येन॑ । ऋ॒तम् । स॒पा॒मि॒ । अ॒रु॒षस्यं॑ । वृष्णः॑ ॥२

ऋतम् । चिकित्वः । ऋतम् । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृन्धि । पूर्वीः ।

न । अहम् । यातुम् । सहसा । न । द्वयेन । ऋतम् । सपामि । अरुषस्य । वृष्णः ॥२

“ऋतं स्तोत्रं हे “चिकित्वः जानन्नग्ने त्वं “ऋतं मया क्रियमाणमिदं स्तोत्रं “चिकिद्धि जानीहि ॥ ‘ कित ज्ञाने '। जुहोत्यादिः । लोटि रूपम् । इत् इति पूरणः । ऋतमिति पदस्य परस्मिन्नामन्त्रिते विद्यमानेऽपि छान्दसत्वात्पराङ्गवद्भावाभावः ॥ किंच “पूर्वीः बह्वीः “ऋतस्य उदकस्य “धाराः सस्यपोषणार्थमुत्पादयितुम् “अनु “तृन्धि मेघाननुविध्य । “सहसा बलेन युक्तः "अहं “यातुं कर्मणां नाशकरीं हिंसां “न “सपामि न स्पृशामि न करोमीति यावत् । “द्वयेन च सत्यानृताभ्यां यत्किंचिदवैदिकं कृत्यं “न सपामि ॥ ‘ षप समवाये' इति धातुः ॥ किंतु "अरुषस्य आरोचमानस्य “वृष्णः कामानां वर्षितुस्तव “ऋतं स्तोत्रमेव सपामि ।।

कया॑ नो अग्न ऋ॒तय॑न्नृ॒तेन॒ भुवो॒ नवे॑दा उ॒चथ॑स्य॒ नव्यः॑ ।

वेदा॑ मे दे॒व ऋ॑तु॒पा ऋ॑तू॒नां नाहं पतिं॑ सनि॒तुर॒स्य रा॒यः ॥३

कया॑ । नः॒ । अ॒ग्ने॒ । ऋ॒तय॑न् । ऋ॒तेन॑ । भुवः॑ । नवे॑दाः । उ॒चथ॑स्य । नव्यः॑ ।

वेद॑ । मे॒ । दे॒वः । ऋ॒तु॒ऽपाः । ऋ॒तू॒नाम् । न । अ॒हम् । पति॑म् । स॒नि॒तुः । अ॒स्य । रा॒यः ॥३

कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ।

वेद । मे । देवः । ऋतुऽपाः । ऋतूनाम् । न । अहम् । पतिम् । सनितुः । अस्य । रायः ॥३

हे “अग्ने “ऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन् "कया केनापि "ऋतेन सत्येन क्रियमाणेन कर्मणा “नः “उचथस्य अस्मदीयस्य स्तोत्रस्य “नवेदाः ज्ञाता “भुवः भवेः । “नव्यः स्तुत्यः "ऋतूनां “ऋतुपाः । द्वितीयः ऋतुशब्दोऽनुवादकः । “देवः द्योतमानोऽग्निः “मे मां “वेद वेत्तु । “सनितुः भजमानस्य “अस्य मम "रायः पश्वादिलक्षणस्य धनस्य “पतिं स्वामिनं तमग्निम् "अहं “न जानामि ॥ भुवः । ‘ भू सत्तायाम् '। लिङर्थे लेट्यडागमः । उवङादेशः । नवेदाः । न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते । निपातनात् । द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च स्कन्दस्वामिना निपातितः। पाणिनिना तु ‘ नभ्राण्नपात् ' इति सूत्रे न वेत्तीत्येतस्मिन्नर्थे निपातितः । अस्यार्थस्यानुपपन्नत्वात् स्कन्दस्वामिपक्ष एवाश्रीयते ॥

के ते॑ अग्ने रि॒पवे॒ बन्ध॑नासः॒ के पा॒यवः॑ सनिषन्त द्यु॒मन्तः॑ ।

के धा॒सिम॑ग्ने॒ अनृ॑तस्य पान्ति॒ क आस॑तो॒ वच॑सः सन्ति गो॒पाः ॥४

के । ते॒ । अ॒ग्ने॒ । रि॒पवे॑ । बन्ध॑नासः । के । पा॒यवः॑ । स॒नि॒ष॒न्त॒ । द्यु॒ऽमन्तः॑ ।

के । धा॒सिम् । अ॒ग्ने॒ । अनृ॑तस्य । पा॒न्ति॒ । के । अस॑तः । वच॑सः । स॒न्ति॒ । गो॒पाः ॥४

के । ते । अग्ने । रिपवे । बन्धनासः । के । पायवः । सनिषन्त । द्युऽमन्तः ।

के । धासिम् । अग्ने । अनृतस्य । पान्ति । के । असतः । वचसः । सन्ति । गोपाः ॥४

हे “अग्ने ये “रिपवे स्वकीयस्य शत्रोः “बन्धनासः बन्धकाः स्युः “ते त्वत्संबन्धिनस्ते पुरुषाः “के कीदृशाः । सामर्थ्यातिशयादेवंविधा इति केनापि ज्ञातुं न शक्यन्त इत्यर्थः । ये “पायवः जनानां रक्षितारः “द्युमन्तः दीप्तिमन्तः “सनिषन्त दीनेभ्यो धनं प्रयच्छन्ति ते त्वदीयाः कीदृशाः । ये “अनृतस्य असत्यस्य “धासिं धारकं जनं "पान्ति रक्षन्ति ते. त्वदीया जनाः “के “सन्ति । न केऽपीत्यर्थः । ये “असतः दुष्टस्याभिशापादिलक्षणस्य “वचसः “गोपाः गोपयितारः रक्षितारस्ते त्वदीयाः “के सन्ति । न केऽपीत्यर्थः । अथवा ये के जना रिपोर्बन्धकाः । ये के पायवो रक्षितारः सनिषन्त धनं प्रयच्छन्ति द्युमन्तः दीप्तिमन्तः । ये केऽनृतस्यासत्यस्य धासिं धारकं जनं पान्ति अनृतजनितपापात् परिहृत्य सन्मार्गप्रदानेन रक्षन्ति । ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपा गोपायितारः सन्ति ते सर्वे त्वदीयाः । त्वदुपासकाः इत्यर्थः ॥

सखा॑यस्ते॒ विषु॑णा अग्न ए॒ते शि॒वास॒ः सन्तो॒ अशि॑वा अभूवन् ।

अधू॑र्षत स्व॒यमे॒ते वचो॑भिरृजूय॒ते वृ॑जि॒नानि॑ ब्रु॒वन्त॑ः ॥५

सखा॑यः । ते॒ । विषु॑णाः । अ॒ग्ने॒ । ए॒ते । शि॒वासः॑ । सन्तः॑ । अशि॑वाः । अ॒भू॒व॒न् ।

अधू॑र्षत । स्व॒यम् । ए॒ते । वचः॑ऽभिः । ऋ॒जु॒ऽय॒ते । वृ॒जि॒नानि॑ । ब्रु॒वन्तः॑ ॥५

सखायः । ते । विषुणाः । अग्ने । एते । शिवासः । सन्तः । अशिवाः । अभूवन् ।

अधूर्षत । स्वयम् । एते । वचःऽभिः । ऋजुऽयते । वृजिनानि । ब्रुवन्तः ॥५

हे “अग्ने “ते तव “सखायः स्तोतारः “विषुणाः विप्रकीर्णाः सर्वत्र व्याप्ताः “एते पूर्वम् “अशिवाः परनिन्दादीनि कुर्वाणास्त्वत्परिचर्यां त्यजन्तोऽभद्राः “सन्तः इदानीं त्वत्परिचर्यां कुर्वन्तः “शिवासः शिवा आढ्याः "अभूवन् । किंच ये “ऋजूयते ऋजु सम्यगाचरतेऽपि मह्यं “वचोभिः असाधूक्तिभिः “वृजिनानि कुटिलानि “ब्रुवन्तः ते “एते मम सपत्नाः “स्वयम् एव “अधूर्षत अहिंस्यन्त ॥ धूर्वतेर्हिंसाकर्मण इदं रूपम् ॥

यस्ते॑ अग्ने॒ नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॑त्यरु॒षस्य॒ वृष्ण॑ः ।

तस्य॒ क्षय॑ः पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेष॑ः ॥६

यः । ते॒ । अ॒ग्ने॒ । नम॑सा । य॒ज्ञम् । ईट्टे॑ । ऋ॒तम् । सः । पा॒ति॒ । अ॒रु॒षस्य॑ । वृष्णः॑ ।

तस्य॑ । क्षयः॑ । पृ॒थुः । आ । सा॒धुः । ए॒तु॒ । प्र॒ऽसर्स्राणस्य । नहु॑षस्य । शेषः॑ ॥६

यः । ते । अग्ने । नमसा । यज्ञम् । ईट्टे । ऋतम् । सः । पाति । अरुषस्य । वृष्णः ।

तस्य । क्षयः । पृथुः । आ । साधुः । एतु । प्रऽसर्स्राणस्य । नहुषस्य । शेषः ॥६

हे “अग्ने “यः मनुष्यः “यज्ञं यजनीयं “ते त्वां “नमसा स्तोत्रेण “ईट्टे स्तौति । यद्वा । ते तुभ्यं यज्ञं यागं नमसान्नरूपेण हविषा ईट्टे यजति । अस्मिन् पक्षे यजेः ‘बहुलं छन्दसि' इति शपः श्लुः । ‘ श्लौ ' इति द्विर्वचनम् । ‘ बहुलं छन्दसि ' इति संप्रसारणम् । सवर्णदीर्घः । जकारस्य टकारः ॥ यः "अरुषस्य रोचमानस्य “वृष्णः कामानां वर्षितुरग्नेः “ऋतं स्तोत्रं “पाति रक्षति “तस्य यजमानस्य “क्षयः गृहं “पृथुः विस्तीर्णं भवति । पश्वादिलक्षणैर्धनैः संपूर्णं भवतीत्यर्थः । प्रसर्स्राणस्य प्रकर्षेण त्वत्परिचर्यां गच्छतः ”नहुषस्य मनुष्यस्य “साधुः कामानां साधकः “शेषः । शिष्यत इति शेषः । पुत्रः “आ “एतु आगच्छतु भवत्वित्यर्थः ॥ ॥ ४ ॥

# ऋग्वेदः सूक्तं ५.१३



दे. अग्निः। गायत्री।

---

अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि ।

अग्ने अर्चन्त ऊतये ॥१॥

अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।

देवस्य द्रविणस्यवः ॥२॥

अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।

स यक्षद्दैव्यं जनम् ॥३॥

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।

त्वया यज्ञं वि तन्वते ॥४॥

त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् ।

स नो रास्व सुवीर्यम् ॥५॥

अग्ने नेमिरराँ इव देवाँस्त्वं परिभूरसि ।

आ राधश्चित्रमृञ्जसे ॥६॥

**सायणभाष्यम्**

‘अर्चन्तस्त्वा' इति षड्टचं त्रयोदशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयम् । अनुक्रान्तं च -- ‘ अर्चन्तो गायत्रं तु' इति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि आश्विनशस्त्रे इदमादिके द्वे सूक्ते । सूत्रितं च - अर्चन्तस्त्वेति सूक्ते' ( आश्व. श्रौ. ४. १३) इति । आहवनीयोपस्थाने “त्वमग्ने सप्रथा असि ' इत्येका । सूत्रितं च - ‘ सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च ' ( आश्व. श्रौ. ३. १० ) इति । अश्वमेधे पौष्णेष्टौ ‘ त्वमग्ने सप्रथाः ' इति प्रथमाज्यभागानुवाक्या । ‘त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ ' ( आश्व. श्रौ. १०. ६ ) इति ।।

अर्च॑न्तस्त्वा हवाम॒हेऽर्च॑न्त॒ः समि॑धीमहि ।

अग्ने॒ अर्च॑न्त ऊ॒तये॑ ॥१

अर्च॑न्तः । त्वा॒ । ह॒वा॒म॒हे॒ । अर्च॑न्तः । सम् । इ॒धी॒म॒हि॒ ।

अग्ने॑ । अर्च॑न्तः । ऊ॒तये॑ ॥१

अर्चन्तः । त्वा । हवामहे । अर्चन्तः । सम् । इधीमहि ।

अग्ने । अर्चन्तः । ऊतये ॥१

हे “अग्ने “त्वा त्वाम् “अर्चन्तः पूजयन्तो वयं “हवामहे आह्वयामः । "अर्चन्तः स्तुवन्तो वयम् “ऊतये रक्षणाय तर्पणाय वा त्वां “समिधीमहि समिद्भिः संदीपयामः । अर्चन्त इति तृतीयं पदम् आदरातिशयार्थम् ॥

अ॒ग्नेः स्तोमं॑ मनामहे सि॒ध्रम॒द्य दि॑वि॒स्पृश॑ः ।

दे॒वस्य॑ द्रविण॒स्यव॑ः ॥२

अ॒ग्नेः । स्तोम॑म् । म॒ना॒म॒हे॒ । सि॒ध्रम् । अ॒द्य । दि॒वि॒ऽस्पृशः॑ ।

दे॒वस्य॑ । द्र॒वि॒ण॒स्यवः॑ ॥२

अग्नेः । स्तोमम् । मनामहे । सिध्रम् । अद्य । दिविऽस्पृशः ।

देवस्य । द्रविणस्यवः ॥२

“द्रविणस्यवः द्रविणं धनमिच्छन्तो वयं “दिविस्पृशः सूर्यरूपेणाकाशं व्याप्नुवतः “देवस्य द्योतमानस्य “अग्नेः “सिध्रं पुरुषार्थानां साधकं “स्तोमं स्तोत्रम् “अद्य अस्मिन्नहनि “मनामहे ब्रूमः ॥

अ॒ग्निर्जु॑षत नो॒ गिरो॒ होता॒ यो मानु॑षे॒ष्वा ।

स य॑क्ष॒द्दैव्यं॒ जन॑म् ॥३

अ॒ग्निः । जु॒ष॒त॒ । नः॒ । गिरः॑ । होता॑ । यः । मानु॑षेषु । आ ।

सः । य॒क्ष॒त् । दैव्य॑म् । जन॑म् ॥३

अग्निः । जुषत । नः । गिरः । होता । यः । मानुषेषु । आ ।

सः । यक्षत् । दैव्यम् । जनम् ॥३

“होता देवानामाह्वाता “यः “अग्निः “मानुषेष्वा वसति “सः अग्निः “नः अस्माकं “गिरः स्तुतीः “जुषत सेवताम् । सोऽग्निः “दैव्यं “जनं देवसंबन्धिनं जनं “यक्षत् यजतु ॥

त्वम॑ग्ने स॒प्रथा॑ असि॒ जुष्टो॒ होता॒ वरे॑ण्यः ।

त्वया॑ य॒ज्ञं वि त॑न्वते ॥४

त्वम् । अ॒ग्ने॒ । स॒ऽप्रथाः॑ । अ॒सि॒ । जुष्टः॑ । होता॑ । वरे॑ण्यः ।

त्वया॑ । य॒ज्ञम् । वि । त॒न्व॒ते॒ ॥४

त्वम् । अग्ने । सऽप्रथाः । असि । जुष्टः । होता । वरेण्यः ।

त्वया । यज्ञम् । वि । तन्वते ॥४

हे “अग्ने “जुष्टः सर्वदा प्रीतः "वरेण्यः सर्वैर्वरणीयः “होता “त्वं “सप्रथाः सर्वतः पृथुः “असि भवसि । तथाह यास्कः - ‘ सप्रथाः सर्वतः पृथुः ' ( निरु. ६. ७ ) इति । किंच सर्वे यजमानाः “त्वया साधनेन “यज्ञं “वि “तन्वते ॥

त्वाम॑ग्ने वाज॒सात॑मं॒ विप्रा॑ वर्धन्ति॒ सुष्टु॑तम् ।

स नो॑ रास्व सु॒वीर्य॑म् ॥५

त्वाम् । अ॒ग्ने॒ । वा॒ज॒ऽसात॑मम् । विप्राः॑ । व॒र्ध॒न्ति॒ । सुऽस्तु॑तम् ।

सः । न॒ः । रा॒स्व॒ । सु॒ऽवीर्य॑म् ॥५

त्वाम् । अग्ने । वाजऽसातमम् । विप्राः । वर्धन्ति । सुऽस्तुतम् ।

सः । नः । रास्व । सुऽवीर्यम् ॥५

हे “अग्ने “विप्राः मेधाविनः स्तोतारः “वाजसातमम् । वाजोऽन्नम् । तद्ददतं “सुष्टुतं पूर्वैः महर्षिभिः सम्यक् स्तुतं “त्वां “वर्धन्ति । स्तोत्रैर्वर्धयन्ति । “सः त्वं “नः अस्मभ्यं “सुवीर्यं सर्वैः श्लाघनीयं बलं "रास्व देहि ।

अग्ने॑ ने॒मिर॒राँ इ॑व दे॒वाँस्त्वं प॑रि॒भूर॑सि ।

आ राध॑श्चि॒त्रमृ॑ञ्जसे ॥६

अग्ने॑ । ने॒मिः । अ॒रान्ऽइ॑व । दे॒वान् । त्वम् । प॒रि॒ऽभूः । अ॒सि॒ ।

आ । राधः॑ । चि॒त्रम् । ऋ॒ञ्ज॒से॒ ॥६

अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वम् । परिऽभूः । असि ।

आ । राधः । चित्रम् । ऋञ्जसे ॥६

हे “अग्ने “त्वं “देवान् “परिभूरसि । स्वतेजसा परिभवसि । कथमिव । “नेमिः प्रकाशमानः चक्रस्य बाह्यो वलयः “अरानिव नाभावर्पितान् सूक्ष्मान् स्थासकानिव। किंच त्वं “चित्रं नानाविधं “राधः । राध्नुवन्ति साधयन्त्यनेन पुरुषार्थानिति राधो धनम् । “आ “ऋञ्जसे । स्तोतृभ्यः प्रसाधय । धननामसु पाठात् ‘राधो धनम्' इत्युक्तम् ॥ ॥ ५ ॥

# ऋग्वेदः सूक्तं ५.१४



दे. अग्निः। गायत्री ।

अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् ।

हव्या देवेषु नो दधत् ॥१॥

तमध्वरेष्वीळते देवं मर्ता अमर्त्यम् ।

यजिष्ठं मानुषे जने ॥२॥

तं हि शश्वन्त ईळते स्रुचा देवं घृतश्चुता ।

अग्निं हव्याय वोळ्हवे ॥३॥

अग्निर्जातो अरोचत घ्नन्दस्यूञ्ज्योतिषा तमः ।

अविन्दद्गा अपः स्वः ॥४॥

अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत ।

वेतु मे शृणवद्धवम् ॥५॥

अग्निं घृतेन वावृधु स्तोमेभिर्विश्वचर्षणिम् ।

स्वाधीभिर्वचस्युभिः ॥६॥

**सायणभाष्यम्**

‘अग्निं स्तोमेन' इति षड्टचं चतुर्दशं सूक्तं सुतंभरस्य आर्षं गायत्रमाग्नेयम् । ‘अग्निं स्तोमेन' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

अ॒ग्निं स्तोमे॑न बोधय समिधा॒नो अम॑र्त्यम् ।

ह॒व्या दे॒वेषु॑ नो दधत् ॥१

अ॒ग्निम् । स्तोमे॑न । बो॒ध॒य॒ । स॒म्ऽइ॒धा॒नः । अम॑र्त्यम् ।

ह॒व्या । दे॒वेषु॑ । न॒ः । द॒ध॒त् ॥१

अग्निम् । स्तोमेन । बोधय । सम्ऽइधानः । अमर्त्यम् ।

हव्या । देवेषु । नः । दधत् ॥१

हे स्तोतः “अमर्त्यम् अमरणधर्माणम् “अग्निं “स्तोमेन स्तोत्रेण “बोधय। स्वाभिलषितार्थसिद्धये प्रबोधय । योऽग्निः “समिधानः स्तोत्रैः सम्यक् प्रकाशमानः सः “नः “हव्या अस्मदीयानि हव्यानि हवींषि “देवेषु “दधत् निदधातु ॥ ।।

तम॑ध्व॒रेष्वी॑ळते दे॒वं मर्ता॒ अम॑र्त्यम् ।

यजि॑ष्ठं मानु॑षे॒ जने॑ ॥२

तम् । अ॒ध्व॒रेषु॑ । ई॒ळ॒ते॒ । दे॒वम् । मर्ता॑ः । अम॑र्त्यम् ।

यजि॑ष्ठम् । मानु॑षे । जने॑ ॥२

तम् । अध्वरेषु । ईळते । देवम् । मर्ताः । अमर्त्यम् ।

यजिष्ठम् । मानुषे । जने ॥२

“मर्ताः मनुष्याः “देवं द्योतमानम् “अमर्त्यम् अमरणधर्माणं “मानुषे मनुष्याणां संबन्धिनि “जने लोके “यजिष्ठं यष्टृतमं “तम् अग्निम् “अध्वरेषु सप्ततन्तुषु “ईळते स्तुवन्ति ॥

तं हि शश्वं॑न्त॒ ईळ॑ते स्रु॒चा दे॒वं घृ॑त॒श्चुता॑ ।

अ॒ग्निं ह॒व्याय॒ वोळ्ह॑वे ॥३

तम् । हि । शश्वं॑न्तः । ईळ॑ते । स्रु॒चा । दे॒वम् । घृ॒त॒ऽश्चुता॑ ।

अ॒ग्निम् । ह॒व्याय॑ । वोळ्ह॑वे ॥३

तम् । हि । शश्वन्तः । ईळते । स्रुचा । देवम् । घृतऽश्चुता ।

अग्निम् । हव्याय । वोळ्हवे ॥३

“शश्वन्तः बहवः स्तोतारः “तं “देवम् “अग्निम् “ईळते स्तुवन्ति । कीदृशास्ते । “घृतश्चुता घृतं क्षरन्त्या “स्रुचा सहिताः । किमर्थं स्तुवन्ति । “हव्याय हव्यवहनार्थं चरुपुरोडाशादिलक्षणं हविः “वोढवे वोढुम् ॥

अ॒ग्निर्जा॒तो अ॑रोचत॒ घ्नन्दस्यू॒ञ्ज्योति॑षा॒ तम॑ः ।

अवि॑न्द॒द्गा अ॒पः स्व॑ः ॥४

अ॒ग्निः । जा॒तः । अ॒रो॒च॒त॒ । घ्नन् । दस्यू॑न् । ज्योति॑षा । तमः॑ ।

अवि॑न्दत् । गाः । अ॒पः । स्वः॑ ॥४

अग्निः । जातः । अरोचत । घ्नन् । दस्यून् । ज्योतिषा । तमः ।

अविन्दत् । गाः । अपः । स्वः ॥४

“जातः अरण्योर्मथनेन प्रादुर्भूतः “अग्निः “दस्यून् यज्ञविघ्नकारिणः शत्रून् “घ्नन् हिंसन् “ज्योतिषा स्वेन तेजसा “तमः घ्नन् “अरोचत अदीप्यत । किंच “गा “अपः उदकानि “स्वः सूर्यं च “अविन्दत् अवेदयत् ॥

अ॒ग्निमी॒ळेन्यं॑ क॒विं घृ॒तपृ॑ष्ठं सपर्यत ।

वेतु॑ मे शृ॒णव॒द्धव॑म् ॥५

अ॒ग्निम् । ई॒ळेन्य॑म् । क॒विम् । घृ॒तऽपृ॑ष्ठम् । स॒प॒र्य॒त॒ ।

वेतु॑ । मे॒ । शृ॒णव॑त् । हव॑म् ॥५

अग्निम् । ईळेन्यम् । कविम् । घृतऽपृष्ठम् । सपर्यत ।

वेतु । मे । शृणवत् । हवम् ॥५

हे जनाः “ईळेन्यं स्तुत्यं “कविं क्रान्तदर्शिनं “घृतपृष्ठं दीप्तोपरिभागम् “अग्निं “सपर्यत पूजयत । सोऽग्निः “मे “हवं मदीयमाह्वानं "वेतु कामयताम् । “शृणवत् शृणोतु च ॥

अ॒ग्निं घृ॒तेन॑ वावृधु॒ः स्तोमे॑भिर्वि॒श्वच॑र्षणिम् ।

स्वा॒धीभि॑र्वच॒स्युभि॑ः ॥६

अ॒ग्निम् । घृ॒तेन॑ । व॒वृ॒धु॒ः । स्तोमे॑भिः । वि॒श्वऽच॑र्षणिम् ।

सु॒ऽआ॒धीभि॑ः । व॒च॒स्युऽभि॑ः ॥६

अग्निम् । घृतेन । ववृधुः । स्तोमेभिः । विश्वऽचर्षणिम् ।

सुऽआधीभिः । वचस्युऽभिः ॥६

ऋत्विजः “विश्वचर्षणिं विश्वस्य द्रष्टारं “स्वाधीभिः शोभनाध्यानैः “वचस्युभिः स्तुतिकामैर्देवैः समेतम् “अग्निं “घृतेन “स्तोमेभिः स्तोमैः स्तोत्रैः “ववृधुः अवर्धयन् ॥ ॥ ६ ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं ५.१५



दे. अग्निः। त्रिष्टुप्।

---

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।

घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥१॥

ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।

दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः ॥२॥

अङ्होयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय ।

स संवतो नवजातस्तुतुर्यात्सिङ्हं न क्रुद्धमभितः परि ष्ठुः ॥३॥

मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च ।

वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥४॥

वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः ।

पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥५॥

**सायणभाष्यम्**

द्वितीयेऽनुवाके अष्टादश सूक्तानि । तत्र 'प्र वेधसे' इति पञ्चर्चं प्रथमं सूक्तमाङ्गिरसस्य धरुणस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रानुक्रमणिका – प्र वेधसे पञ्चाङ्गिरसो धरुणः' इति । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च --- प्र वेधसे कवये त्वं नो अग्ने वरुणस्य विद्वान्' ( आश्व. श्रौ. ४. १३ ) इति ॥

प्र वे॒धसे॑ क॒वये॒ वेद्या॑य॒ गिरं॑ भरे य॒शसे॑ पू॒र्व्याय॑ ।

घृ॒तप्र॑सत्तो॒ असु॑रः सु॒शेवो॑ रा॒यो ध॒र्ता ध॒रुणो॒ वस्वो॑ अ॒ग्निः ॥१

प्र । वे॒धसे॑ । क॒वये॑ । वेद्या॑य । गिर॑म् । भ॒रे॒ । य॒शसे॑ । पू॒र्व्याय॑ ।

घृ॒तऽप्र॑सत्तः । असु॑रः । सु॒ऽशेवः॑ । रा॒यः । ध॒र्ता । ध॒रुणः॑ । वस्वः॑ । अ॒ग्निः ॥१

प्र । वेधसे । कवये । वेद्याय । गिरम् । भरे । यशसे । पूर्व्याय ।

घृतऽप्रसत्तः । असुरः । सुऽशेवः । रायः । धर्ता । धरुणः । वस्वः । अग्निः ॥१

यः “अग्निः “घृतप्रसत्तः हवीरूपेण घृतेन प्रसन्नः “असुरः बलवान् “सुशेवः । शोभनं शेवं सुखं यस्यासौ सुशेवः । शेवमिति सुखनामसु पाठात् । “रायः धनस्य “धर्ता पोषकः “धरुणः हविषां धारकः “वस्वः वासकः अग्निः भवति “वेधसे विधात्रे “कवये क्रान्तदृशे “वेद्याय स्तुत्याय ॥ विदिरयं मनिना समानार्थो मनिश्च स्तुतिकर्मा ॥ “यशसे यशस्विने “पूर्व्याय मुख्याय तस्मा अग्नये “गिरं स्तुतिं “प्र “भरे प्रणयानि ॥

ऋ॒तेन॑ ऋ॒तं ध॒रुणं॑ धारयन्त य॒ज्ञस्य॑ शा॒के प॑र॒मे व्यो॑मन् ।

दि॒वो धर्म॑न्ध॒रुणे॑ से॒दुषो॒ नॄञ्जा॒तैरजा॑ताँ अ॒भि ये न॑न॒क्षुः ॥२

ऋ॒तेन॑ । ऋ॒तम् । ध॒रुण॑म् । धा॒र॒य॒न्त॒ । य॒ज्ञस्य॑ । शा॒के । प॒र॒मे । वि॒ऽओ॑मन् ।

दि॒वः । धर्म॑न् । ध॒रुणे॑ । से॒दुषः॑ । नॄन् । जा॒तैः । अजा॑तान् । अ॒भि । ये । न॒न॒क्षुः ॥२

ऋतेन । ऋतम् । धरुणम् । धारयन्त । यज्ञस्य । शाके । परमे । विऽओमन् ।

दिवः । धर्मन् । धरुणे । सेदुषः । नॄन् । जातैः । अजातान् । अभि । ये । ननक्षुः ॥२

“ये यजमानाः ”दिवः द्युलोकस्य “धरुणे धारके “धर्मन् यज्ञे “सेदुषः आसीनान् “नॄन् नेतॄन् “अजातान देवान "जातैः मनुष्यैर्ऋत्विग्भि “अभि “ननक्षुः अभिप्राप्नुवन्ति ते यजमानाः “यज्ञस्य “धरुणं धारकम् “ऋतं सत्यरूपमग्निं “शाके कर्मणि निमित्ते “परमे उत्कृष्टे “व्योमन् स्थाने उत्तरवेद्याम् “ऋतेन स्तोत्रेण “धारयन्त धारयन्ति ।।

अ॒ङ्हो॒युवं॑स्त॒न्वं॑स्तन्वते॒ वि वयो॑ म॒हद्दु॒ष्टरं॑ पू॒र्व्याय॑ ।

स सं॒वतो॒ नवं॑जातस्तुतुर्यात्सि॒ङ्हं न क्रु॒द्धम॒भित॒ः परिं॑ ष्ठुः ॥३

अं॒ह॒ःऽयुवः॑ । त॒न्वः॑ । त॒न्व॒ते॒ । वि । वयः॑ । म॒हत् । दु॒स्तरं॑म् । पू॒र्व्याय॑ ।

सः । स॒म्ऽवतः॑ । नवं॑ऽजातः । तु॒तु॒र्या॒त् । सिं॒हम् । न । क्रु॒द्धम् । अ॒भितः॑ । परिं॑ । स्थु॒ः ॥३

अंहःऽयुवः । तन्वः । तन्वते । वि । वयः । महत् । दुस्तरम् । पूर्व्याय ।

सः । सम्ऽवतः । नवऽजातः । तुतुर्यात् । सिंहम् । न । क्रुद्धम् । अभितः । परि । स्थुः ॥३

ये यजमानाः “पूर्व्याय मुख्यायास्मा अग्नये “महत् अधिकं “दुष्टरं राक्षसैर्दुष्प्रापं “वयः हवीरूपमन्नं प्रयच्छन्ति ते यजमानाः “तन्वः स्वास्तनूः “अंहोयुवः अंहसा वियोजिकाः “वि “तन्वते विस्तारयन्ति । “नवजातः “सः अग्निः “संवतः संगतान् शत्रून् “तुतुर्यात् तरतु । किंच “अभितः सर्वतो वर्तमानाः शत्रवो मां “परि वर्जयित्वा “स्थुः तिष्ठेयुः । कथमिव । मृगाः "क्रुद्धं “सिंहं “न सिंहमिव ॥

मा॒तेव॒ यद्भरं॑से पप्रथा॒नो जनं॑जनं॒ धायं॑से॒ चक्षं॑से च ।

वयो॑वयो जरसे॒ यद्दधा॑न॒ः परि॒ त्मना॒ विषुं॑रूपो जिगासि ॥४

मा॒ताऽइं॑व । यत् । भरं॑से । प॒प्र॒था॒नः । जनं॑म्ऽजनम् । धायं॑से । चक्षं॑से । च॒ ।

वयः॑ऽवयः । ज॒र॒से॒ । यत् । दधा॑नः । परिं॑ । त्मना॑ । विषुं॑ऽरूपः । जि॒गा॒सि॒ ॥४

माताऽइव । यत् । भरसे । पप्रथानः । जनम्ऽजनम् । धायसे । चक्षसे । च ।

वयःऽवयः । जरसे । यत् । दधानः । परि । त्मना । विषुऽरूपः । जिगासि ॥४

“पप्रथानः सर्वत्र प्रथमानः “यत् यस्त्वं “मातेव जननीव “जनंजनं सर्वं जनं “भरसे बिभर्षि । किंच “धायसे धारणाय “चक्षसे दर्शनाय “च सर्वैः प्रार्थ्यसे । “यत् यदा “दधानः धार्यमाणो भवसि तदा “वयोवयः सर्वमन्नं “जरसे जरयसि । अपि च विषुरूपः नानारूपः सन् “त्मना आत्मना “परि “जिगासि सर्वभूतानि परिगच्छसि ॥

वाजो॒ नु ते॒ शव॑सस्पा॒त्वन्त॑मु॒रुं दोघं॑ ध॒रुणं॑ देव रा॒यः ।

प॒दं न ता॒युर्गुहा॒ दधा॑नो म॒हो रा॒ये चि॒तय॒न्नत्रि॑मस्पः ॥५

वाजः॑ । नु । ते॒ । शव॑सः । पा॒तु॒ । अन्त॑म् । उ॒रुम् । दोघ॑म् । ध॒रुण॑म् । दे॒व॒ । रा॒यः ।

प॒दम् । न । ता॒युः । गुहा॑ । दधा॑नः । म॒हः । रा॒ये । चि॒तय॑न् । अत्रि॑म् । अ॒स्प॒रित्य॑स्पः ॥५

वाजः । नु । ते । शवसः । पातु । अन्तम् । उरुम् । दोघम् । धरुणम् । देव । रायः ।

पदम् । न । तायुः । गुहा । दधानः । महः । राये । चितयन् । अत्रिम् । अस्परित्यस्पः ॥५

हे देव द्योतमानाग्ने “उरुं पृथुं “दोघं कामानां दोग्धारं "रायः धनस्य “धरुणं धारकं “वाजः हविर्लक्षणमन्नं “ते त्वदीयस्य “शवसः बलस्य “अन्तं समाप्तिं संपूर्तिं “नु अद्य “पातु रक्षतु । “तायुः “न तस्करो यथा “गुहा गुहायां “पदं द्रव्यं “दधानः धारयन् रक्षति तद्वत् "महः महते “राये धनाय धनलाभार्थं “चितयन् सन्मार्गं प्रकाशयन् “अत्रिमस्पः । अत्रिमृषिमप्रीणयः । यद्वा तमापद्योन्ऽपारयः४॥ ‘ स्पृ प्रीणनपारणयोः' इति धातुः ॥ ॥ ७ ॥

# ऋग्वेदः सूक्तं ५.१६



दे. अग्निः। अनुष्टुप्, ५ पङ्क्तिः।

बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥१॥
स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।
वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥२॥
अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।
विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥३॥
अधा ह्यग्न एषां सुवीर्यस्य मंहना ।
तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥४॥
नू न एहि वार्यमग्ने गृणान आ भर ।
ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥५॥

**सायणभाष्यम्**

बृहद्वयः' इति पञ्चर्चं द्वितीयं सूक्तमात्रेयस्य पूरोरार्षम् । अन्त्या पङ्क्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तं - बृहत्पूरुः पङ्क्त्यन्तं हि ' इति । प्रातरनुवाके आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चेदमादीनि दश सूक्तानि चतुर्थनवमवर्जितानि । आदितस्त्रिषु सूक्तेष्वन्त्यामुद्धरेत् । तथा च सूत्रितं-- बृहद्वय इति दशानां चतुर्थनवमे उद्धरेदुत्तमामुत्तमां चादितस्त्रयाणाम् । ( आश्व. श्रौ. ४. १३ ) इति ॥

बृ॒हद्व॑यो॒ हि भा॒नवेऽर्चा॑ दे॒वाया॒ग्नये॑ ।

यं मि॒त्रं न प्रश॑स्तिभि॒र्मर्ता॑सो दधि॒रे पु॒रः ॥१

बृ॒हत् । वयः॑ । हि । भा॒नवे॑ । अर्च॑ । दे॒वाय॑ । अ॒ग्नये॑ ।

यम् । मि॒त्रम् । न । प्रश॑स्तिऽभिः । मर्ता॑सः । द॒धि॒रे । पु॒रः ॥१

बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये ।

यम् । मित्रम् । न । प्रशस्तिऽभिः । मर्तासः । दधिरे । पुरः ॥१

यज्ञे "भानवे दीप्तिमते अग्नये "बृहद्वयः हवीरूपमन्नं दीयते "हि । अतस्त्वमपि “देवाय द्योतमानाय “अग्नये वयः “अर्च प्रयच्छ । "मर्तासः मनुष्याः "यम् अग्निं "मित्रं "न सखायमिव “प्रशस्तिभिः प्रकृष्टाभिः स्तुतिभिः "पुरः "दधिरे पुरस्कुर्वन्ति ।।

स हि द्युभि॒र्जना॑ना॒ं होता॒ दक्ष॑स्य बा॒ह्वोः ।

वि ह॒व्यम॒ग्निरा॑नु॒षग्भगो॒ न वार॑मृण्वति ॥२

सः । हि । द्युऽभिः॑ । जना॑नाम् । होता॑ । दक्ष॑स्य । बा॒ह्वोः ।

वि । ह॒व्यम् । अ॒ग्निः । आ॒नु॒षक् । भगः॑ । न । वार॑म् । ऋ॒ण्व॒ति॒ ॥२

सः । हि । द्युऽभिः । जनानाम् । होता । दक्षस्य । बाह्वोः ।

वि । हव्यम् । अग्निः । आनुषक् । भगः । न । वारम् । ऋण्वति ॥२

यः "अग्निः "हव्यं हविः “आनुषक् देवेष्वनुषक्तं करोति “बाह्वोः भुजयोः "दक्षस्य बलस्य "द्युभिः द्युतिभिर्युक्तः "सः अग्निः “जनानां यजमानानां “होता देवानामाह्वाता भवति । "भगो "न सूर्य इव "वारं वरणीयं धनं "वि “ऋण्वति विशेषेण प्रयच्छति मनुष्येषु ॥

अ॒स्य स्तोमे॑ म॒घोन॑ः स॒ख्ये वृ॒द्धशो॑चिषः ।

विश्वा॒ यस्मि॑न्तुवि॒ष्वणि॒ सम॒र्ये शुष्म॑माद॒धुः ॥३

अ॒स्य । स्तोमे॑ । म॒घोनः॑ । स॒ख्ये । वृ॒द्धऽशो॑चिषः ।

विश्वा॑ । यस्मि॑न् । तु॒वि॒ऽस्वनि॑ । सम् । अ॒र्ये । शुष्म॑म् । आ॒ऽद॒धुः ॥३

अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः ।

विश्वा । यस्मिन् । तुविऽस्वनि । सम् । अर्ये । शुष्मम् । आऽदधुः ॥३

“मघोनः मघवतो धनवतः "वृद्धशोचिषः । वृद्धानि प्रवृद्धानि शोचींषि तेजांसि यस्यासौ बृद्धशोचिः । तस्यैवंविधस्याग्नेः "स्तोमे स्तोत्रे "सख्ये च स्याम। "तुविष्वणि बहुशब्दे “अर्ये स्वामिनि "यस्मिन् अग्नौ “विश्वा ॥ ‘ सुपां सुलुक्° ' इति डादेशः ॥ विश्वे सर्वे ऋत्विजः “शुष्मं बलं हविर्भिः स्तोत्रैश्च "सम् "आदधुः सम्यगादधति ॥

अधा॒ ह्य॑ग्न एषां सु॒वीर्य॑स्य मं॒हना॑ ।

तमिद्य॒ह्वं न रोद॑सी॒ परि॒ श्रवो॑ बभूवतुः ॥४

अधं॑ । हि । अ॒ग्ने॒ । ए॒षा॒म् । सु॒ऽवीर्य॑स्य । मं॒हना॑ ।

तम् । इत् । य॒ह्वम् । न । रोद॑सी॒ इति॑ । परि॑ । श्रवः॑ । ब॒भू॒व॒तु॒ः ॥४

अध । हि । अग्ने । एषाम् । सुऽवीर्यस्य । मंहना ।

तम् । इत् । यह्वम् । न । रोदसी इति । परि । श्रवः । बभूवतुः ॥४

हे "अग्ने "अध अथ “एषाम् अस्माकं यजमानानां "सुवीर्यस्य सर्वैः स्पृहणीयस्य बलस्य “मंहना मंहनायै दानाय भव ॥ मंहतिर्दानकर्मा ॥ “रोदसी द्यावापृथिव्यौ "यह्वं “न महान्तं सूर्यमिव “श्रवः सर्वैः श्रवणीयं "तमित् तमग्निमेव "परि “बभूवतुः परिगृह्णीतः ॥

नू न॒ एहि॒ वार्य॒मग्ने॑ गृणा॒न आ भ॑र ।

ये व॒यं ये च॑ सू॒रय॑ः स्व॒स्ति धाम॑हे॒ सचो॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥५

नु । न॒ः । आ । इ॒हि॒ । वार्य॑म् । अग्ने॑ । गृ॒णा॒नः । आ । भ॒र॒ ।

ये । व॒यम् । ये । च॒ । सू॒रय॑ः । स्व॒स्ति । धाम॑हे । सचा॑ । उ॒त । ए॒धि॒ । पृ॒त्ऽसु । न॒ः । वृ॒धे ॥५

नु । नः । आ । इहि । वार्यम् । अग्ने । गृणानः । आ । भर ।

ये । वयम् । ये । च । सूरयः । स्वस्ति । धामहे । सचा । उत । एधि । पृत्ऽसु । नः । वृधे ॥५

हे "अग्ने "गृणानः स्तूयमानः सन् “नु क्षिप्रम् “एहि । यज्ञं प्रत्यागच्छ । अगत्य च "नः अस्मभ्यं “वार्यं वरणीयं धनम् “आ “भर संपादय । "ये “वयं यजमानाः "ये “च "सूरयः स्तोतारः "सचा हविर्भिः सहिता उभे ये वयं "स्वस्ति स्तोत्रं “धामहे कुर्मः । “उत अपि च "पृत्सु पृतनासु "नः अस्माकं "वृधे समृद्धये “एधि भव ॥ ॥ ८ ॥

# ऋग्वेदः सूक्तं ५.१७

ऋग्वेदः - मण्डल ५
← सूक्तं ५.१६ सूक्तं ५.१७ सूक्तं ५.१८ →
पूरुरात्रेयः

दे. अग्निः। अनुष्टुप्, ५ पङ्क्तिः

आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये ।

अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥१॥

अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे ।

तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥२॥

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।

दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥३॥

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ ।

अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥४॥

नू न इद्धि वार्यमासा सचन्त सूरयः ।

ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥५॥

**सायणभाष्यम्**

‘आ यज्ञैः' इति पञ्चर्चं तृतीयं सूक्तमात्रेयस्य पूरोरार्षमाग्नेयम् । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । ‘आ यज्ञैः' इत्यनुक्रमणिका । अन्त्यावर्जं प्रातरनुवाकाश्विनशस्त्रयोः ‘ बृहद्वयः' इत्यादिदशसूक्तमध्ये विनियोग उक्तः ॥

आ य॒ज्ञैर्दे॑व॒ मर्त्य॑ इ॒त्था तव्यां॑समू॒तये॑ ।

अ॒ग्निं कृ॒ते स्व॑ध्व॒रे पू॒रुरी॑ळी॒ताव॑से ॥१

आ । य॒ज्ञैः । दे॒व॒ । मर्त्यः॑ । इ॒त्था । तव्यां॑सम् । ऊ॒तये॑ ।

अ॒ग्निम् । कृ॒ते । सु॒ऽअ॒ध्व॒रे । पू॒रुः । ई॒ळी॒त॒ । अव॑से ॥१

आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसम् । ऊतये ।

अग्निम् । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥१

हे "देव "मर्त्यः मनुष्य ऋत्विक् "इत्था इत्थं "तव्यांसं स्वतेजोभिः प्रवृद्धम् "अग्निम् “ऊतये तर्पणाय "यज्ञैः स्तोत्रैः “आ ह्वयति । किंच "पूरुः मनुष्यः स्तोता "कृते "स्वध्वरे शोभने क्रतौ तम् अग्निम् “अवसे रक्षणाय “ईळीत स्तौति ॥

अस्य॒ हि स्वय॑शस्तर आ॒सा विं॑धर्म॒न्मन्य॑से ।

तं नाकं॑ चि॒त्रशो॑चिषं म॒न्द्रं प॒रो म॑नी॒षया॑ ॥२

अस्य॑ । हि । स्वय॑शःऽतरः । आ॒सा । वि॒ऽध॒र्म॒न् । मन्य॑से ।

तम् । नाक॑म् । चि॒त्रऽशो॑चिषम् । म॒न्द्रम् । प॒रः । म॒नी॒षया॑ ॥२

अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे ।

तम् । नाकम् । चित्रऽशोचिषम् । मन्द्रम् । परः । मनीषया ॥२

हे "विधर्मन् । विशिष्टो धर्मो यस्यासौ विधर्मा स्तोता। तस्य संबोधनम् । हे स्तोतः "स्वयशस्तरः सुयशसां मध्येऽतिशयेन सुयशास्त्वं "मनीषया प्रकृष्टबुद्ध्या साधनेन “तं प्रसिद्धम् "अस्य अमुं “हि अग्निम् आसा आस्येन वाचा “मन्यसे स्तौषि । किंविशिष्टमग्निम् । "नाकं सुखम् । अकं दुःखम् । न विद्यतेऽकं यस्य सः । तं "चित्रशोचिषं चित्रतेजसं "मन्द्रं स्तुत्यं “परः परस्तात् स्थितम् ॥

अ॒स्य वासा उं अ॒र्चिषा॒ य आयु॑क्त तु॒जा गि॒रा ।

दि॒वो न यस्य॒ रेत॑सा बृ॒हच्छोच॑न्त्य॒र्चय॑ः ॥३

अ॒स्य । वै । अ॒सौ । ऊं इति॑ । अ॒र्चिषा॑ । यः । अयु॑क्त । तु॒जा । गि॒रा ।

दि॒वः । न । यस्य॑ । रेत॑सा । बृ॒हत् । शोच॑न्ति । अ॒र्चयः॑ ॥३

अस्य । वै । असौ । ऊं इति । अर्चिषा । यः । अयुक्त । तुजा । गिरा ।

दिवः । न । यस्य । रेतसा । बृहत् । शोचन्ति । अर्चयः ॥३

"यः अग्निः "तुजा जगद्रक्षणसमर्थेन बलेन "गिरा स्तुत्या "अयुक्त संबद्धो भवति "दिवो "न द्योतमानस्यादित्यस्येव "यस्य अग्नेः "रेतसा प्रभया कृत्स्नं जगद्व्याप्तं यस्याग्नेः "बृहत् बृहन्तः "अर्चयः दीप्तयः "शोचन्ति प्रकाशन्ते "अस्य "वै खल्वग्नेः "अर्चिषा प्रभया असौ आदित्यः अर्चिष्मान् भवति । "उ इति पूरणः ॥

अ॒स्य क्रत्वा॒ विचे॑तसो द॒स्मस्य॒ वसु॒ रथ॒ आ ।

अधा॒ विश्वा॑सु॒ हव्यो॒ऽग्निर्वि॒क्षु प्र शं॑स्यते ॥४

अ॒स्य । क्रत्वा॑ । विऽचे॑तसः । द॒स्मस्य॑ । वसु॑ । रथे॑ । आ ।

अध॑ । विश्वा॑सु । हव्यः॑ । अ॒ग्निः । वि॒क्षु । प्र । श॒स्य॒ते॒ ॥४

अस्य । क्रत्वा । विऽचेतसः । दस्मस्य । वसु । रथे । आ ।

अध । विश्वासु । हव्यः । अग्निः । विक्षु । प्र । शस्यते ॥४

"विचेतसः सुमतय ऋत्विजः "दस्मस्य दर्शनीयस्य "अस्य अग्नेः "क्रत्वा कर्मणा यज्ञादिना "वसु वसूनि धनानि "रथे "आ दधति । "हव्यः यज्ञार्थमाह्वातव्यः सः "अग्निः "अध अथ उत्पत्त्यनन्तरमेव "विश्वासु सर्वासु "विक्षु प्रजासु "प्र "शस्यते स्तूयते ॥

नू न॒ इद्धि वार्य॑मा॒सा स॑चन्त सू॒रय॑ः ।

ऊर्जो॑ नपाद॒भिष्ट॑ये पा॒हि श॒ग्धि स्व॒स्तय॑ उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥५

नु । न॒ः । इत् । हि । वार्य॑म् । आ॒सा । स॒च॒न्त॒ । सू॒रयः॑ ।

ऊर्जः॑ । न॒पा॒त् । अ॒भिष्ट॑ये । पा॒हि । श॒ग्धि । स्व॒स्तये॑ । उ॒त । ए॒धि॒ । पृ॒त्ऽसु । न॒ः । वृ॒धे ॥५

नु । नः । इत् । हि । वार्यम् । आसा । सचन्त । सूरयः ।

ऊर्जः । नपात् । अभिष्टये । पाहि । शग्धि । स्वस्तये । उत । एधि । पृत्ऽसु । नः । वृधे ॥५

हे अग्ने “नः अस्मभ्यं “वार्यं वरणीयं धनं "नु क्षिप्रं प्रयच्छ । “इद्धि इति पूरणौ । यतः "सूरयः स्तोतारस्त्वत्तः सकाशात् “आसा आस्येन स्तोत्रेण “सचन्त धनं लभन्ते । किंच हे “ऊर्जा "नपात् अन्नस्य न पातयितः बलस्य पुत्र वा "अभिष्टये अभीच्छते मह्यमन्नं प्रयच्छेति शेषः । “पाहि । अस्मानापद्यो रक्ष । "स्वस्तये क्षेमाय पश्वादिलक्षणस्य धनस्य क्षेमार्थं “शग्धि त्वां याचे ॥ व्यत्ययेन मध्यमः ॥ शक्तो भवेति वा । हे अग्ने “उत अपि च "पृत्सु पृतनासु “नो “वृधे समृद्धये “एधि भव ॥ ॥ ९ ॥

विकिस्रोतः

# ऋग्वेदः सूक्तं ५.१८

| | | |
|---|---|---|
| | **ऋग्वेदः - मण्डल ५** | |
| ← सूक्तं ५.१७ | सूक्तं ५.१८ | सूक्तं ५.१९ → |
| | द्वितो मृक्तवाहा आत्रेयः | |

दे. अग्निः। अनुष्टुप्, ५ पङ्क्तिः

---

प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः ।

विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥१॥

द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना ।

इन्दुं स धत्त आनुषक्स्तोता चित्ते अमर्त्य ॥२॥

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम् ।

अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥३॥

चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये ।

स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥४॥

ये मे पञ्चाशतं ददुरश्वानां सधस्तुति ।

द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥५॥

**सायणभाष्यम्**

'प्रातरग्निः' इति पञ्चर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका - प्रातर्मृक्तवाहा द्वितः' इति । मृक्तवाहा इति विशेषणविशिष्ट आत्रेयो द्वित ऋषिः। ' पङ्क्त्यन्तं हि ' इति हिशब्दादस्यापि सूक्तस्य पञ्चमी पङ्क्तिः । पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टभः । उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ॥

प्रा॒तर॒ग्निः पु॑रुप्रि॒यो वि॒शः स्त॑वे॒ताति॑थिः ।

विश्वा॑नि॒ यो अम॑र्त्यो ह॒व्या मर्ते॑षु रण्य॑ति ॥१

प्रा॒तः । अ॒ग्निः । पु॒रु॒ऽप्रि॒यः । वि॒शः । स्त॒वे॒त॒ । अति॑थिः ।

विश्वा॑नि । यः । अम॑र्त्यः । ह॒व्या । मर्ते॑षु । रण्य॑ति ॥१

प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः ।

विश्वानि । यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥१

“पुरुप्रियः बहुप्रियः “विशः यजमाने धनस्य निवेशकः "अतिथिः । यजमानानां गृहान्प्रति तिथिष्वभ्येतीत्यतिथिः । तथाह यास्कः- ' अतिथिरभ्यतितो गृहान्भवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा ' ( निरु. ४. ५) इति । एवंविधः "अग्निः "प्रातः "स्तवेत स्तूयते । "अमर्त्यः अमरणधर्मा "यः अग्निः “मर्तेषु मनुष्येषु यजमानेषु स्थितानि “विश्वानि सर्वाणि "हव्या हव्यानि हवींषि “रण्यति कामयते ॥

द्वि॒ताय॑ मृ॒क्तवा॑हसे॒ स्वस्य॒ दक्ष॑स्य मं॒हना॑ ।

इन्दुं॒ स धं॑त्त आनु॒षक्स्तो॒ता चि॑त्ते अमर्त्य ॥२

द्वि॒ताय॑ । मृ॒क्तऽवा॑हसे । स्वस्य॑ । दक्ष॑स्य । मं॒हना॑ ।

इन्दु॑म् । सः । ध॒त्ते॒ । आ॒नु॒षक् । स्तो॒ता । चि॒त् । ते॒ । अ॒म॒र्त्य॒ ॥२

द्विताय । मृक्तऽवाहसे । स्वस्य । दक्षस्य । मंहना ।

इन्दुम् । सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥२

हे अग्ने "द्विताय द्वितपुत्राय “मृक्तवाहसे। मृक्तं शुद्धं हविर्देवेभ्यो वहति प्रापयतीति मृक्तवाहाः । तस्मै "स्वस्य आत्मीयस्य "दक्षस्य बलस्य धनस्य वा “मंहना मंहनायै दानाय भव । हे "अमर्त्य नित्याग्ने यतः कारणात् "ते तुभ्यं "सः मृक्तवाहाः "आनुषक् सर्वदानुषक्तम् "इन्दुं सोमं “धत्ते धारयति “स्तोता “चित् स्तोता च भवति ॥

तं वों दी॒र्घायुं॑शोचिषं गि॒रा हुं॑वे म॒घोनां॑म् ।

अरिं॑ष्टो॒ येषां॒ रथो॒ व्यं॑श्वदाव॒न्नीयं॑ते ॥३

तम् । व॒ः । दी॒र्घायुं॑ऽशोचिषम् । गि॒रा । हु॒वे॒ । म॒घोनां॑म् ।

अरिं॑ष्टः । येषां॑म् । रथः॑ । वि । अ॒श्व॒ऽदा॒व॒न् । ईयं॑ते ॥३

तम् । वः । दीर्घायुऽशोचिषम् । गिरा । हुवे । मघोनाम् ।

अरिष्टः । येषाम् । रथः । वि । अश्वऽदावन् । ईयते ॥३

हे अग्ने "दीर्घायुशोचिषं दीर्घगमनदीप्तिं "तं "वः । पूजायां बहुवचनम् । त्वां “मघोनां धनिनां कृते "गिरा स्तोत्रेण "हुवे आह्वयामि । हे "अश्वदावन् अश्वानां दातः "येषां धनिनां “रथः युद्धेषु “अरिष्टः शत्रुभिरहिंसितः "वि “ईयते विगच्छतु ॥

चि॒त्रा वा॒ येषु॒ दीधिं॑तिरा॒सन्नु॒क्था पान्ति॒ ये ।

स्ती॒र्णं ब॒र्हिः स्वं॑र्णरे॒ श्रवां॑सि दधिरे॒ परिं ॥४

चि॒त्रा । वा॒ । येषुं॑ । दीधिं॑तिः । आ॒सन् । उ॒क्था । पान्तिं॑ । ये ।

स्ती॒र्णम् । ब॒र्हिः । स्वः॑ऽनरे । श्रवां॑सि । द॒धि॒रे॒ । परिं॑ ॥४

चित्रा । वा । येषु । दीधितिः । आसन् । उक्था । पान्ति । ये ।

स्तीर्णम् । बर्हिः । स्वःऽनरे । श्रवांसि । दधिरे । परि ॥४

"येषु ऋत्विक्षु "चित्रा नानाविधा "दीधितिः यज्ञविषया क्रिया भवति । "ये "आसन् आस्ये “उक्था उक्थानि स्तोत्राणि "पान्ति रक्षन्ति तैर्ऋत्विग्भिः “स्तीर्णं स्तीर्णस्य "बर्हिः बर्हिषः “परि उपरि “श्रवांसि अन्नानि हवींषि "स्वर्णरे । स्वः स्वर्गं नरं यजमानं नयतीति

स्वर्णरो यज्ञः । तस्मिन् “दधिरे निधीयन्ते ॥

ये मे॑ पञ्चा॒शतं॑ द॒दुरश्वा॑नां स॒धस्तु॑ति ।

द्यु॒मद॑ग्ने॒ महि॒ श्रवो॑ बृ॒हत्कृ॑धि म॒घोनां॑ नृ॒वद॑मृत नृ॒णाम् ॥५

ये । मे॒ । प॒ञ्चा॒शत॑म् । द॒दुः । अश्वा॑नाम् । स॒धऽस्तु॑ति ।

द्यु॒ऽमत् । अ॒ग्ने॒ । महि॑ । श्रवः॑ । बृ॒हत् । कृ॒धि॒ । म॒घोना॑म् । नृ॒ऽवत् । अ॒मृ॒त॒ । नृ॒णाम् ॥५

ये । मे । पञ्चाशतम् । ददुः । अश्वानाम् । सधऽस्तुति ।

द्युऽमत् । अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनाम् । नृऽवत् । अमृत । नृणाम् ॥५

"ये मघवानो दातारः “मे मह्यं "सधस्तुति स्तुत्या सहितं त्वत्स्तोत्रसमनन्तरम् अश्वानां “पञ्चाशतं "ददुः हे "अमृत "अग्ने त्वं तेषां "मघोनां "नृणां “द्युमत् दीप्तिमत् "महि महत् “बृहत् परिवृढं "नृवत् परिचारकमनुष्ययुक्तं “श्रवः अन्नं "कृधि कुरु देहीत्यर्थः ॥ ॥ १० ॥

**टिप्पणी**

५.१८.१ प्रातरग्निः पुरुप्रियो इति

द्र. कौमुदस्य साम (https://sa.wikisource.org/s/2ai8)

# ऋग्वेदः सूक्तं ५.१९



दे. अग्निः। गायत्री, ३-४ अनुष्टुप्, ५ विराड्रूपा

अभ्यवस्थाः प्र जायन्ते प्र वव्रेर्वव्रिश्चिकेत ।

उपस्थे मातुर्वि चष्टे ॥१॥

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति ।

आ दृळ्हां पुरं विविशुः ॥२॥

आ श्वैत्रेयस्य जन्तवो द्युमद्वर्धन्त कृष्टयः ।

निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥३॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा ।

घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥४॥

क्रीळन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः ।

ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः ॥५॥

**सायणभाष्यम्**

‘ अभ्यवस्थाः' इति पञ्चर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका--' अभ्यवस्था वव्रिर्गायत्र्यावनुष्टुभौ विराड्रूपा' इति । आत्रेयो वव्रिर्ऋषिः । प्रथमाद्वितीये गायत्र्यौ तृतीयाचतुर्थ्यावनुष्टुभौ पञ्चमी विराड्रूपा ‘एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा' इत्युक्तलक्षणोपेतत्वात् ॥

अ॒भ्यंव॒स्थाः प्र जा॑यन्ते॒ प्र व॒व्रेर्व॒व्रिश्चि॑केत ।

उ॒पस्थें मा॒तुर्वि च॑ष्टे ॥१

अ॒भि । अ॒व॒ऽस्थाः । प्र । जा॒य॒न्ते॒ । प्र । व॒व्रेः । व॒व्रिः । चि॒के॒त॒ ।

उ॒पऽस्थें । मा॒तुः । वि । च॒ष्टे॒ ॥१

अभि । अवऽस्थाः । प्र । जायन्ते । प्र । वव्रेः । वव्रिः । चिकेत ।

उपऽस्थे । मातुः । वि । चष्टे ॥१

“वव्रेः ऋषेः "अभि उत्तरोत्तरम् “अवस्थाः अशोभना दशाः “प्र “जायन्ते । तादृशीः “वव्रिः हविषां संभक्ता सोऽग्निः “प्र “चिकेत प्रजानीयात् । ज्ञात्वा चापनयत्विति भावः । योऽग्निः "मातुः पृथिव्याः “उपस्थे समीपे स्थितं पदार्थजातं “वि "चष्टे पश्यति ॥

जु॒हु॒रे वि चि॒तय॒न्तोऽनि॑मिषं नृ॒म्णं पा॑न्ति ।

आ दृ॒ळ्हां पुरं॑ विविशुः ॥२

जु॒हु॒रे । वि । चि॒तय॑न्तः । अनि॑ऽमिषम् । नृ॒म्णम् । पा॒न्ति॒ ।

आ । दृ॒ळ्हाम् । पुर॑म् । वि॒वि॒शुः॒ ॥२

जुहुरे । वि । चितयन्तः । अनिऽमिषम् । नृम्णम् । पान्ति ।

आ । दृळ्हाम् । पुरम् । विविशुः ॥२

ये “वि “चितयन्तः तव प्रभावं जानन्तो जनाः "अनिमिषं सर्वदा "जुहुरे जुहुविरे यज्ञार्थं त्वामाह्वयन्ति, आहूय च "नृम्णं तव बलं हविर्भिः स्तोत्रैश्च "पान्ति रक्षन्ति ते “दृळ्हां शत्रुभिः साधयितुमशक्यां “पुरं पुरीम् “आ “विविशुः प्रविशन्ति । ‘ शतं पूर्भिरायसीभिर्नि

पाहि' ( ऋ. सं. ७. ३. ७) इति निगमः ॥

आ श्वैत्रेयस्य जन्तवो द्युमद्वर्धन्त कृष्टयः ।

निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥३

आ । श्वैत्रेयस्य । जन्तवः । द्युऽमत् । वर्धन्त । कृष्टयः ।

निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥३

आ । श्वैत्रेयस्य । जन्तवः । द्युऽमत् । वर्धन्त । कृष्टयः ।

निष्कऽग्रीवः । बृहत्ऽउक्थः । एना । मध्वा । न । वाजऽयुः ॥३

जायन्त इति "जन्तवः । “कृष्टयः मनुष्या ऋत्विजः "मध्वा “न मधुनेव “एना एनया स्तुत्या । यद्वा नकारश्चार्थे । मधुना च "श्वैत्रेयस्य । श्वित्रमन्तरिक्षम् । तत्र भवस्य वैद्युतस्याग्नेः “द्युमत् दीप्तिमत् बलम् “आ “वर्धन्त अभिवर्धयन्ति । किंविधाः कृष्टयः । "निष्कग्रीवः निष्केण सुवर्णेनालंकृतग्रीवाः ॥ व्यत्ययेनैकवचनम् ॥ “बृहदुक्थः बृहत्स्तोत्राः "वाजयुः अन्नकामाः ॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा ।

घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥४

प्रियम् । दुग्धम् । न । काम्यम् । अजामि । जाम्योः । सचा ।

घर्मः । न । वाजऽजठरः । अदब्धः । शश्वतः । दभः ॥४

प्रियम् । दुग्धम् । न । काम्यम् । अजामि । जाम्योः । सचा ।

घर्मः । न । वाजऽजठरः । अदब्धः । शश्वतः । दभः ॥४

“जाम्योः द्यावापृथिव्योः "सचा सहायभूतोऽग्निः "दुग्धं "न पय इव “काम्यं कमनीयम् “अजामि दोषरहितं "प्रियम् अस्मदीयं स्तोत्रं शृणोतु । किंविधोऽग्निः । “घर्मो “न प्रवर्ग्य इव “वाजजठरः । वाजोऽन्नं जठरे यस्य सः । घर्मो यथा हव्येनाज्येन पयसासिक्तो वाजजठरस्तद्वत् । हविर्जठर इत्यर्थः । "अदब्धः शत्रुभिः स्वयमहिंसितः "शश्वतः शाश्वतो नित्यः "दभः शत्रूणां हिंसकः ॥

क्रीळन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः ।

ता अ॑स्य सन्धृ॒षजो॒ न ति॒ग्माः सुसँ॑शिता व॒क्ष्यो॑ वक्षणे॒स्थाः ॥५

क्रीळ॑न् । नः॒ । र॒श्मे॒ । आ । भु॒वः॒ । सम् । भस्म॑ना । वा॒युना॑ । वेवि॑दानः ।

ताः । अ॒स्य॒ । स॒न् । धृ॒षजः॑ । न । ति॒ग्माः । सुऽसँ॑शिताः । व॒क्ष्यः॑ । व॒क्ष॒णे॒ऽस्थाः ॥५

क्रीळन् । नः । रश्मे । आ । भुवः । सम् । भस्मना । वायुना । वेविदानः ।

ताः । अस्य । सन् । धृषजः । न । तिग्माः । सुऽसंशिताः । वक्ष्यः । वक्षणेऽस्थाः ॥५

हे 'रश्मे रश्मिमन्नग्ने "क्रीळन् वनेषु क्रीडन् "भस्मना स्वकार्येण भसितेन "वायुना प्रेरकेण मरुता च "सं "वेविदानः सम्यक् ज्ञायमानस्त्वं "नः अस्माकम् "आ "भुवः । अभिमुखो भव । "वक्षणेस्थाः वक्षणे वह्नौ स्थिताः "वक्ष्यः । हविर्वहन्तीति वक्ष्यो ज्वालाः । "सुसंशिताः सुतीक्ष्णाः "धृषजः शत्रूणां धर्षिकाः "ताः ज्वालाः "अस्य यजमानस्य मम "न "तिग्माः न तीक्ष्णाः "सन् सन्तु ॥ अस्तेर्लेटि रूपम् ॥ ॥ ११ ॥

# ऋग्वेदः सूक्तं ५.२०



दे. अग्निः। अनुष्टुप्, ५ पङ्क्तिः।

---

यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।

तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥१॥

ये अग्ने नेरयन्ति ते वृद्धा उग्रस्य शवसः ।

अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥२॥

होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।

यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥३॥

इत्था यथा त ऊतये सहसावन्दिवेदिवे ।

राय ऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥४॥

**सायणभाष्यम्**

‘ यमग्ने ' इति चतुर्ऋचं षष्ठं सूक्तमत्रीणां प्रयस्वतामार्षमाग्नेयम् । अन्त्या पङ्क्तिः शिष्टा अनुष्टुभः । तथा चानुक्रान्तं - ‘ यमग्ने चतुष्कं प्रयस्वन्तः पङ्‌य्त्‌्न्तं ह ' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । अत्रेश्चतुराख्येऽहीने द्वितीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च - यमग्ने वाजसातमेति द्वितीयेऽहन्याज्यम्' (आश्व. श्रौ. १०. २) इति ॥

यमं॑ग्ने वाजसातम॒ त्वं चि॒न्मन्यं॑से र॒यिम् ।

तं नों गी॒र्भिः श्र॒वाय्यँ॑ देव॒त्रा प॑नया॒ युजं॑म् ॥१

यम् । अ॒ग्ने॒ । वा॒ज॒ऽसा॒त॒म॒ । त्वम् । चि॒त् । मन्यं॑से । र॒यिम् ।

तम् । न॒ः । गी॒ःऽभिः । श्र॒वाय्यं॑म् । दे॒व॒ऽत्रा । प॒न॒य॒ । युजं॑म् ॥१

यम् । अग्ने । वाजऽसातम । त्वम् । चित् । मन्यसे । रयिम् ।

तम् । नः । गीःऽभिः । श्रवाय्यम् । देवऽत्रा । पनय । युजम् ॥१

हे "अग्ने हे “वाजसातम अत्यन्तमन्नद “त्वं "यं "रयिं धनमस्माभिर्दीयमानं हवीरूपं धनं “मन्यसे बुध्यसे । “चित् इति पादपूरणः। “श्रवाय्यं श्रवणीयं प्रशस्यं "गीर्भिः स्तुतिभिः “युजं युक्तं "नः अस्मदीयं हविर्लक्षणं धनं "तं "देवत्रा देवेषु "पनय प्रापयेत्यर्थः ॥

ये अं॑ग्ने॒ नेरयं॑न्ति ते वृ॒द्धा उ॒ग्रस्य॒ शवं॑सः ।

अप॒ द्वेषो॒ अप॒ ह्वरो॒ऽन्यव्रं॑तस्य सश्चिरे ॥२

ये । अ॒ग्ने॒ । न । ई॒रयं॑न्ति । ते॒ । वृ॒द्धाः । उ॒ग्रस्यं॑ । शवं॑सः ।

अपं॑ । द्वेषः॑ । अपं॑ । ह्वरः॑ । अ॒न्यऽव्रं॑तस्य । स॒श्चि॒रे॒ ॥२

ये । अग्ने । न । ईरयन्ति । ते । वृद्धाः । उग्रस्य । शवसः ।

अप । द्वेषः । अप । ह्वरः । अन्यऽव्रतस्य । सश्चिरे ॥२

हे "अग्ने "ये जनाः "वृद्धाः पश्वादिलक्षणैर्धनैः समृद्धाः सन्तः “ते तुभ्यं “नेरयन्ति हवींषि न प्रयच्छन्ति ते "उग्रस्य अधिकेन “शवसः बलेन अन्नेन वा “अप नीताः बलान्नहीना भवन्तीत्यर्थः । किंच “अन्यव्रतस्य अन्यद्वैदिकाद्विभक्तं व्रतं कर्म यस्य तस्यासुरस्य “द्वेषः त्वत्संबन्धिनं विरोधं “ह्वरः अतिहिंसां च "अप "सश्चिरे आत्मानं प्रापयन्ति ॥

होतां॑रं त्वा वृणीम॒हेऽग्ने॒ दक्ष॑स्य॒ साध॑नम् ।

य॒ज्ञेषु॑ पू॒र्व्यं गि॒रा प्रय॑स्वन्तो हवामहे ॥३

होतां॑रम् । त्वा॒ । वृ॒णी॒म॒हे॒ । अग्ने॑ । दक्ष॑स्य । साध॑नम् ।

य॒ज्ञेषु॑ । पू॒र्व्यम् । गि॒रा । प्रय॑स्वन्तः । ह॒वा॒म॒हे॒ ॥३

होतारम् । त्वा । वृणीमहे । अग्ने । दक्षस्य । साधनम् ।

यज्ञेषु । पूर्व्यम् । गिरा । प्रयस्वन्तः । हवामहे ॥३

हे "अग्ने "प्रयस्वन्तः अन्नवन्तः एतन्नामका वयं "दक्षस्य बलस्य "साधनं साधकं साधयितारं त्वां "होतारं देवानामाह्वातारं "वृणीमहे । किंच "यज्ञेषु "पूर्व्यं मुख्यं त्वां "गिरा स्तुतिरूपया वाचा "हवामहे स्तुमः ॥

इ॒त्था यथा॑ त ऊ॒तये॒ सह॑सावन्दि॒वेदि॑वे ।

रा॒य ऋ॒ताय॑ सुक्रतो॒ गोभि॑ः ष्याम सध॒मादो॑ वी॒रैः स्या॑म सध॒माद॑ः ॥४

इ॒त्था । यथा॑ । ते॒ । ऊ॒तये॑ । सह॑साऽवन् । दि॒वेऽदि॑वे ।

रा॒ये । ऋ॒ताय॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो । गोभिः॑ । स्या॒म॒ । स॒ध॒ऽमादः॑ । वी॒रैः । स्या॒म॒ । स॒ध॒ऽमादः॑ ॥४

इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ।

राये । ऋताय । सुक्रतो इति सुऽक्रतो । गोभिः । स्याम । सधऽमादः । वीरैः । स्याम । सधऽमादः ॥४

हे "सहसावन् बलवन्नग्ने "दिवेदिवे अन्वहं वयं "ते तव "ऊतये रक्षणाय "यथा स्याम तथा "इत्था इत्थं कुरु । हे "सुक्रतो "राये धनाय "ऋताय यज्ञाय च यथा "स्याम तथा कुरु । किंच वयं "गोभिः "सधमादः सह माद्यन्तः "स्याम । "वीरैः पुत्रैश्च "सधमादः सह माद्यन्तः स्याम । तथा कुरु ॥ ॥ १२ ॥

# ऋग्वेदः सूक्तं ५.२१



दे. अग्निः। अनुष्टुप्, ४ पङ्क्तिः।

---

मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।

अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥१॥

त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे ।

स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥२॥

त्वां विश्वे सजोषसो देवासो दूतमक्रत ।

सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥३॥

देवं वो देवयज्ययाग्निमीळीत मर्त्यः ।

समिद्धः शुक्र दीदिह्यृतस्य योनिमासदः ससस्य योनिमासदः ॥४॥

**सायणभाष्यम्**

‘ मनुष्वत्त्वा' इति चतुर्ऋचं सप्तमं सूक्तमात्रेयस्य ससस्यार्षम् । ‘ मनुष्वत्ससः' इत्यनुक्रमणिका । पङ्क्त्यन्तं ह ' इति पूर्वत्रोक्तत्वादिदमादीनि त्रीणि सूक्तानि पङ्क्त्यन्तानि । शिष्टा अनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

म॒नु॒ष्वत्त्वा॒ नि धी॑महि मनु॒ष्वत्समि॑धीमहि ।

अग्ने॑ मनु॒ष्वद॑ङ्गिरो दे॒वान्दे॑वय॒ते य॑ज ॥१

म॒नु॒ष्वत् । त्वा॒ । नि । धी॒म॒हि॒ । म॒नु॒ष्वत् । सम् । इ॒धी॒म॒हि॒ ।

अग्ने॑ । म॒नु॒ष्वत् । अ॒ङ्गि॒रः॒ । दे॒वान् । दे॒व॒ऽय॒ते । य॒ज॒ ॥१

मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सम् । इधीमहि ।

अग्ने । मनुष्वत् । अङ्गिरः । देवान् । देवऽयते । यज ॥१

हे "अग्ने "त्वा त्वां "मनुष्वत् मनुरिव "नि “धीमहि । मनुःशब्दो मनुपर्यायः ॥ ‘ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ' इति भसंज्ञायां रुत्वाभावः ॥ “मनुष्वत् मनुरिव त्वा "समिधीमहि समिद्भिः संदीपयामः । हे “अङ्गिरः अङ्गारात्मकाग्ने “देवयते देवकामाथ यजमानाय "मनुष्वत् मनवे मनोरपत्याय “देवान् "यज ॥

त्वं हि मानु॑षे॒ जनेऽग्ने॒ सुप्री॑त इ॒ध्यसे॑ ।

स्रुच॑स्त्वा यन्त्यानु॒षक्सुजा॑त॒ सर्पि॑रासुते ॥२

त्वम् । हि । मानु॑षे । जने॑ । अग्ने॑ । सु॒ऽप्री॑तः । इ॒ध्यसे॑ ।

स्रुचः॑ । त्वा॒ । य॒न्ति॒ । आ॒नु॒षक् । सु॒ऽजा॑त । सर्पिः॑ऽआसुते ॥२

त्वम् । हि । मानुषे । जने । अग्ने । सुऽप्रीतः । इध्यसे ।

स्रुचः । त्वा । यन्ति । आनुषक् । सुऽजात । सर्पिःऽआसुते ॥२

हे "अग्ने “त्वं "मानुषे "जने मनुष्यलोके "सुप्रीतः स्तोत्रैः सुष्ठु प्रीतः सन् "इध्यसे दीप्यसे । "स्रुचः हविर्भिः संपूर्णाः “आनुषक् अनुषक्तं यथा भवति तथा “त्वा त्वां "यन्ति प्राप्नुवन्ति । हे "सुजात हे "सर्पिरासुते घृतयुक्तान्नेति ॥

त्वां विश्वें स॒जोष॑सो दे॒वासो॑ दू॒तम॑क्रत ।

स॒प॒र्यन्त॑स्त्वा कवे य॒ज्ञेषु॑ दे॒वमी॑ळते ॥३

त्वाम् । विश्वें । स॒ऽजोष॑सः । दे॒वासः॑ । दू॒तम् । अ॒क्र॒त॒ ।

स॒प॒र्यन्तः॑ । त्वा॒ । क॒वे॒ । य॒ज्ञेषु॑ । दे॒वम् । ई॒ळ॒ते॒ ॥३

त्वाम् । विश्वे । सऽजोषसः । देवासः । दूतम् । अक्रत ।

सपर्यन्तः । त्वा । कवे । यज्ञेषु । देवम् । ईळते ॥३

“सजोषसः सह प्रीयमाणाः "विश्वे सर्वे "देवासः देवाः “त्वां “दूतम् "अक्रत अकुर्वन् । अतः कारणात् हे "कवे क्रान्तदर्शिन् "देवं द्योतमानं "त्वा त्वां "सपर्यन्तः परिचरन्तो यजमानाः "यज्ञेषु “ईळते देवानाह्वातुं याचन्ते ॥

दे॒वं वो॑ देवय॒ज्यया॒ग्निमी॑ळीत॒ मर्त्यः॑ ।

समि॑द्धः शुक्र दीदिह्यृ॒तस्य॒ योनि॒मास॑दः स॒सस्य॒ योनि॒मास॑दः ॥४

दे॒वम् । व॒ः । दे॒व॒ऽय॒ज्यया॑ । अ॒ग्निम् । ई॒ळी॒त॒ । मर्त्यः॑ ।

सम्ऽइ॑द्धः । शु॒क्र॒ । दी॒दि॒हि॒ । ऋ॒तस्य॑ । योनि॑म् । आ । अ॒स॒द॒ः । स॒सस्य॑ । योनि॑म् । आ । अ॒स॒द॒ः ॥४

देवम् । वः । देवऽयज्यया । अग्निम् । ईळीत । मर्त्यः ।

सम्ऽइद्धः । शुक्र । दीदिहि । ऋतस्य । योनिम् । आ । असदः । ससस्य । योनिम् । आ । असदः ॥४

“मर्त्यः मनुष्यः “देवं द्योतमानम् "अग्निम् अग्रण्यं "वः त्वां "देवयज्यया देवयज्यायै देवयागार्थम् "ईळीत स्तोतुमर्हति । हे "शुक्र शोचिष्मन् “समिद्धः हविर्भिः प्रवृद्धः सन् "दीदिहि दीप्यस्व । “ऋतस्य सत्यभूतस्य "ससस्य ऋषेर्मम "योनिं कारणं स्वर्गसाधनं यज्ञस्थानम् “आसदः । देवतारूपेणासीद। आदरातिशयद्योतनार्थं पुनर्वचनम् ॥ ॥ १३ ॥

# ऋग्वेदः सूक्तं ५.२२

ऋग्वेदः - मण्डल ५
← सूक्तं ५.२१ सूक्तं ५.२२ सूक्तं ५.२३ →
विश्वसामा आत्रेयः।

दे. अग्निः। अनुष्टुप्, ४ पंक्तिः ।

---

प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।

यो अध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥१॥

न्यग्निं जातवेदसं दधाता देवमृत्विजम् ।

प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ॥२॥

चिकित्विन्मनसं त्वा देवं मर्तास ऊतये ।

वरेण्यस्य तेऽवस इयानासो अमन्महि ॥३॥

अग्ने चिकिद्ध्यस्य न इदं वचः सहस्य ।

तं त्वा सुशिप्र दम्पते स्तोमैर्वर्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः ॥४॥

**सायणभाष्यम्**

‘प्र विश्वसामन् ' इति चतुर्ऋचमष्टमं सूक्तम् । आत्रेयो विश्वसामा ऋषिः । चतुर्थी पङ्क्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तं- प्र विश्वसामन्विश्वसाम ' इति । उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ।।

प्र विं॑श्वसामन्नत्रि॒वदर्चा॑ पाव॒कशो॑चिषे ।

यो अ॑ध्व॒रेष्वीड्यो॒ होता॑ म॒न्द्रत॑मो वि॒शि ॥१

प्र । वि॒श्व॒ऽसा॒म॒न् । अ॒त्रि॒ऽवत् । अर्च॑ । पा॒व॒कऽशो॑चिषे ।

यः । अ॒ध्व॒रेषु॑ । ईड्यः॑ । होता॑ । म॒न्द्रऽत॑मः । वि॒शि ॥१

प्र । विश्वऽसामन् । अत्रिऽवत् । अर्च । पावकऽशोचिषे ।

यः । अध्वरेषु । ईड्यः । होता । मन्द्रऽतमः । विशि ॥१

हे "विश्वसामन् । ऋषेः संबोधनमेतत् । त्वम् "अत्रिवत् अत्रिरिव "पावकशोचिषे शोधकदीप्तये तस्मा अग्नये “प्र "अर्च प्रगाय । "यः अग्निः "अध्वरेष्वीड्यः सर्वैर्यज्वभिः स्तुत्यः “होता देवानामाह्वाता "विशि जने "मन्द्रतमः स्तुत्यतमः ।।

न्य१॒ग्निं जा॒तवे॑दसं॒ दधा॑ता दे॒वमृ॒त्विज॑म् ।

प्र य॒ज्ञ ए॑त्वानु॒षग॒द्या दे॒वव्य॑चस्तमः ॥२

नि । अ॒ग्निम् । जा॒तऽवे॑दसम् । दधा॑त । दे॒वम् । ऋ॒त्विज॑म् ।

प्र । य॒ज्ञः । ए॒तु॒ । आ॒नु॒षक् । अ॒द्य । दे॒वव्य॑चःऽतमः ॥२

नि । अग्निम् । जातऽवेदसम् । दधात । देवम् । ऋत्विजम् ।

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ॥२

हे यजमानाः "जातवेदसं जातप्रज्ञं जातधनं वा “देवं द्योतमानम् "ऋत्विजम् ऋतुयष्टारम् “अग्निं "नि “दधात निधत्त । किंच “देवव्यचस्तमः देवानामाप्ततमः "यज्ञः यज्ञसाधनमस्माभिर्दीयमानं हविः "आनुषक् अनुषक्तं यथा भवति तथा “अद्य अस्मिन्नहनि तमग्निं "प्र “एतु प्रगच्छतु ॥

चि॒कि॒त्विन्म॑नसं त्वा दे॒वं मर्ता॑स ऊ॒तये॑ ।

वरे॑ण्यस्य॒ तेऽव॑स इया॒नासो॑ अमन्महि ॥३

चि॒कि॒त्वित्ऽम॑नसम् । त्वा॒ । दे॒वम् । मर्ता॑सः । ऊ॒तये॑ ।

वरे॑ण्यस्य । ते॒ । अव॑सः । इ॒या॒नासः॑ । अ॒म॒न्म॒हि॒ ॥३

चिकित्वित्ऽमनसम् । त्वा । देवम् । मर्तासः । ऊतये ।

वरेण्यस्य । ते । अवसः । इयानासः । अमन्महि ॥३

हे अग्ने "चिकित्विन्मनसम् । चिकित्वित् जानत् मनो यस्यासौ चिकित्विन्मनाः । तं "देवं “त्वा त्वाम् "इयानासः उपगच्छन्तः "मर्तासः मनुष्या वयम् "ऊतये रक्षणार्थं "वरेण्यस्य संभजनीयस्य “ते तव “अवसः अवसे तर्पणाय “अमन्महि स्तुमः ।।

अग्ने॑ चिकि॒द्ध्य१॒॑स्य न॑ इ॒दं वचः॑ सहस्य ।

तं त्वा॑ सुशिप्र दम्पते॒ स्तोमै॑र्वर्ध॒न्त्यत्र॑यो गी॒र्भिः शु॑म्भ॒न्त्यत्र॑यः ॥४

अग्ने॑ । चि॒कि॒द्धि । अ॒स्य । नः॒ । इ॒दम् । वचः॑ । स॒ह॒स्य॒ ।

तम् । त्वा॒ । सु॒ऽशि॒प्र॒ । द॒म्ऽप॒ते॒ । स्तोमैः॑ । व॒र्ध॒न्ति॒ । अत्र॑यः । गी॒ःऽभिः । शु॒म्भ॒न्ति॒ । अत्र॑यः ॥४

अग्ने । चिकिद्धि । अस्य । नः । इदम् । वचः । सहस्य ।

तम् । त्वा । सुऽशिप्र । दम्ऽपते । स्तोमैः । वर्धन्ति । अत्रयः । गीःऽभिः । शुम्भन्ति । अत्रयः ॥४

हे "अग्ने "सहस्य सहसः बलस्य पुत्र "नः अस्मदीयम् "अस्य “इदं परिचरणमिदं "वचः स्तोत्रं च “चिकिद्धि जानीहि । हे "सुशिप्र । शोभने शिप्रे हनू नासिके वा यस्यासौ सुशिप्रः । तस्य संबोधनम् । सुशिप्र सुहनो "दम्पते गृहपते “तं त्वाम् "अत्रयः अत्रिपुत्राः "स्तोमैः स्तोत्रैः "वर्धन्ति वर्धयन्ति । “अत्रयः “गीर्भिः “शुम्भन्ति अलंकुर्वन्ति ॥ ॥ १४ ॥

# ऋग्वेदः सूक्तं ५.२३



दे. अग्निः। अनुष्टुप्, ४ पङ्क्तिः।

---

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।

विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥१॥

तमग्ने पृतनाषहं रयिं सहस्व आ भर ।

त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥२॥

विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।

होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥३॥

स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे ।

अग्न एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥४॥

**सायणभाष्यम्**

‘ अग्ने सहन्तम्' इति चतुर्ऋचं नवमं सूक्तम् । अत्रानुक्रमणिका - अग्ने द्युम्नो विश्वचर्षणिः ' इति । द्युम्न ऋषिः । चतुर्थी पङ्क्तिः । आद्यास्तिस्रोऽनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तान्तःपातित्वादुक्तो विनियोगः ॥

अग्ने॒ सह॑न्त॒मा भ॑र द्यु॒म्नस्य॑ प्रा॒सहा॑ र॒यिम् ।

विश्वा॒ यश्च॑र्ष॒णीर॒भ्या॒३॒॑सा वाजे॑षु सा॒सह॑त् ॥१

अग्ने॑ । सह॑न्तम् । आ । भ॒र॒ । द्यु॒म्नस्य॑ । प्र॒ऽसहा॑ । र॒यिम् ।

विश्वाः॑ । यः । च॒र्ष॒णीः । अ॒भि । आ॒सा । वाजे॑षु । स॒सह॑त् ॥१

अग्ने । सहन्तम् । आ । भर । द्युम्नस्य । प्रऽसहा । रयिम् ।

विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥१

हे "अग्ने "प्रासहा प्रकृष्टेन बलेन "सहन्तं शत्रूनभिभवन्तं "रयिं पुत्रं "द्युम्नस्य द्युम्नाय मह्यं ऋषये “आ “भर आहर ॥ चतुर्थ्यर्थे षष्ठी ॥ एतदेव विवृणोति । "यः पुत्रः "आसा आस्येन स्तोत्रेण युक्तः सन् "वाजेषु युद्धेषु “अभि आभिमुख्येन गतान् "विश्वाः सर्वान् "चर्षणीः मनुष्यान् शत्रून् “सासहत् अभिभवति ॥

तम॑ग्ने पृतना॒षहं॑ र॒यिं स॑हस्व॒ आ भ॑र ।

त्वं हि स॒त्यो अद्भु॑तो दा॒ता वाज॑स्य॒ गोम॑तः ॥२

तम् । अ॒ग्ने॒ । पृ॒त॒ना॒ऽसह॑म् । र॒यिम् । स॒ह॒स्व॒ः । आ । भ॒र॒ ।

त्वम् । हि । स॒त्यः । अद्भु॑तः । दा॒ता । वाज॑स्य । गोऽम॑तः ॥२

तम् । अग्ने । पृतनाऽसहम् । रयिम् । सहस्वः । आ । भर ।

त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोऽमतः ॥२

हे "अग्ने "सहस्वः बलवन् "पृतनासहं पृतनाः सेना अभिभवितारं "रयिं पुत्रं त्वम् “आ “भर आहर । “त्वं "हि "सत्यः सत्यभूतः "अद्भुतः महान् "गोमतः गोभिर्युक्तस्य “वाजस्य अन्नस्य "दाता ॥

विश्वे॒ हि त्वां स॒जोष॑सो॒ जना॑सो वृ॒क्तब॑र्हिषः ।

होता॑रं॒ सद्म॑सु प्रि॒यं व्यन्ति॒ वार्या॑ पु॒रु ॥३

विश्वे॑ । हि । त्वा॒ । स॒ऽजोष॑सः । जना॑सः । वृ॒क्तऽब॑र्हिषः ।

होता॑रम् । सद्म॑ऽसु । प्रि॒यम् । व्यन्ति॑ । वार्या॑ । पु॒रु ॥३

विश्वे । हि । त्वा । सऽजोषसः । जनासः । वृक्तऽबर्हिषः ।

होतारम् । सद्मऽसु । प्रियम् । व्यन्ति । वार्या । पुरु ॥३

हे अग्ने "सजोषसः सह प्रीयमाणाः "वृक्तबर्हिषः लूनबर्हिषः "विश्वे सर्वे "जनासः जना ऋत्विजः "सद्मसु यज्ञगृहेषु "होतारं देवानामाह्वातारं "प्रियं सर्वेषां प्रीतिकरं "त्वा त्वां "पुरु पुरूणि बहूनि "वार्या वरणीयानि धनानि "व्यन्ति याचन्ते ॥

स हि ष्मा॑ वि॒श्वच॑र्षणिर॒भिमा॑ति॒ सहो॑ द॒धे ।

अग्न॑ ए॒षु क्षये॒ष्वा रे॒वन्न॑ः शुक्र दीदिहि द्युमत्पा॑वक दीदिहि ॥४

सः । हि । स्म॒ । वि॒श्वऽच॑र्षणिः । अ॒भिऽमा॑ति । सहः॑ । द॒धे ।

अग्ने॑ । ए॒षु । क्षये॑षु । आ । रे॒वत् । नः॒ । शु॒क्र॒ । दी॒दि॒हि॒ । द्यु॒ऽमत् । पा॒व॒क॒ । दी॒दि॒हि॒ ॥४

सः । हि । स्म । विश्वऽचर्षणिः । अभिऽमाति । सहः । दधे ।

अग्ने । एषु । क्षयेषु । आ । रेवत् । नः । शुक्र । दीदिहि । द्युऽमत् । पावक । दीदिहि ॥४

हे "अग्ने "सः लोकेषु प्रसिद्धः "विश्वचर्षणिः ऋषिः "अभिमाति शत्रूणां हिंसकं "सहः बलं "दधे धारयतु । "हि "ष्म इति पूरणौ । हे "शुक्र शोचिष्मन् त्वं "नः अस्मदीयेषु "एषु "क्षयेषु गृहेषु "रेवत् धनयुक्तं यथा भवति तथा "आ "दीदिहि आदीप्यस्व । हे "पावक पापानां शोधकाग्ने त्वं "द्युमत् दीप्तियुक्तं यशोयुक्तं च "दीदिहि दीप्यस्व ॥ ॥ १५ ॥

# ऋग्वेदः सूक्तं ५.२४



दे. अग्निः। द्विपदा विराट्

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥१॥

वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥२॥

स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥३॥

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥४॥

**सायणभाष्यम्**

• अग्ने त्वं नः' इति चतुर्ऋचं दशमं सूक्तम् । अत्रानुक्रमणिका - अग्ने त्वं गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकर्चा द्वैपदम् ' इति । विंशतिका द्विपदा विराजः ' इत्युक्तत्वाच्चतस्रो द्विपदा विराजः । बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्च क्रमेण चतसृणामृषयः । ते च गौपायना लौपायना वा । अग्निर्देवता । महापितृयज्ञे आहवनीयं प्रति गच्छन्त ऋत्विज इदं सूक्तं जपेयुः । तथा च सूत्रितम् - ' अथैनमभिसमायन्ति मा प्र गामाग्ने त्वं न इति जपन्तः ' (आश्व. श्रौ. २. १९) इति । दशरात्रे

षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य ‘अग्ने त्वम्' इति द्वे, “तं त्वा शोचिष्ठ' इत्येका, एवं मिलितो द्वैपदस्तृचः स्तोत्रियः । तथैव सूत्रितम् - अग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा '(आश्व. श्रौ. ८. २) इति ॥

अग्ने॒ त्वं नो॒ अन्त॑म उ॒त त्रा॒ता शि॒वो भ॑वा वरू॒थ्य॑ः ॥१

अग्ने॑ । त्वम् । न॒ः । अन्त॑मः । उ॒त । त्रा॒ता । शि॒वः । भ॒व॒ । व॒रू॒थ्य॑ः ॥१

अग्ने । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः ॥१

हे “अग्ने “वरूथ्यः वरणीयः संभजनीयः । यद्वा । वरूथैः परिधिभिर्वृतः “त्वं “नः अस्माकम् “अन्तमः अन्तिकतमः “भव । "उत अपि च “त्राता रक्षकः “शिवः सुखकरश्च भव ।

वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑ नक्षि द्यु॒मत्त॑मं र॒यिं दा॑ः ॥२

वसु॑ः । अ॒ग्निः । वसु॑ऽश्रवाः । अच्छ॑ । न॒क्षि॒ । द्यु॒मत्ऽत॑मम् । र॒यिम् । दा॒ः ॥२

वसुः । अग्निः । वसुऽश्रवाः । अच्छ । नक्षि । द्युमत्ऽतमम् । रयिम् । दाः ॥२

“वसुः वासकः “अग्निः सर्वेषामग्रणीः “वसुश्रवाः व्याप्तान्नस्त्वम् "अच्छ आभिमुख्येन “नक्षि अस्मान् व्याप्नुहि "द्युमत्तमम् अतिशयेन दीप्तिमन्तं “रयिं पश्वादिलक्षणं धनं “दाः अस्मभ्यं देहि ॥

स नो॑ बोधि श्रु॒धी हव॑मुरु॒ष्या णो॑ अघाय॒तः स॑मस्मात् ॥३

सः । न॒ः । बो॒धि॒ । श्रु॒धि । हव॑म् । उ॒रु॒ष्य । न॒ः । अ॒घ॒ऽय॒तः । स॒म॒स्मा॒त् ॥३

सः । नः । बोधि । श्रुधि । हवम् । उरुष्य । नः । अघऽयतः । समस्मात् ॥३

हे अग्ने “सः त्वं “नः अस्मान् "बोधि बुध्यस्व । “हवम् अस्मदीयमाह्वानं “श्रुधि शृणु । “अघायतः अघमिच्छतः “समस्मात् सर्वस्माजनात् "नः अस्मान् “उरुष्य रक्ष ।

तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥४

तम् । त्वा॒ । शो॒चि॒ष्ठ॒ । दी॒दि॒ऽव॒ः । सु॒म्नाय॑ । नू॒नम् । ई॒म॒हे॒ । सखि॑ऽभ्यः ॥४

तम् । त्वा । शोचिष्ठ । दीदिऽवः । सुम्नाय । नूनम् । ईमहे । सखिऽभ्यः ॥४

“शोचिष्ठ अतिशयेन शोचिष्मन् “दीदिवः स्वतेजोभिर्दीप्ताग्ने "तं त्वां “सुम्नाय सुखाय । सुम्नमिति सुखनाम् । तदर्थं “सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः तदर्थं च "नूनम् “ईमहे याचामहे ॥ ॥ १६ ॥

**टिप्पणी**

द्र. ऋग्वेदः १०.५७-६०, शुक्लयजुर्वेदः ३.२५-२८

# ऋग्वेदः सूक्तं ५.२५


ऋग्वेदः - मण्डल ५

← सूक्तं ५.२४ | सूक्तं ५.२५ | सूक्तं ५.२६ →

वसूयव आत्रेयाः


दे. अग्निः। अनुष्टुप्।

---

अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।

रासत्पुत्र ऋषूणामृतावा पर्षति द्विषः ॥१॥

स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे ।

होतारं मन्द्रजिह्वमित्सुदीतिभिर्विभावसुम् ॥२॥

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।

अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥३॥

अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन् ।

अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥४॥

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।

अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥५॥

अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः ।

अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥६॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।

महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥७॥

तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् ।

उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥८॥

एवाँ अग्निं वसूयवः सहसानं ववन्दिम ।

स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥९॥

**सायणभाष्यम्**

‘ अच्छा वो अग्निम्' इति नवर्चमेकादशं सूक्तम् । अत्रानुक्रमणिका- अच्छा वो नव वसूयव अनुष्टुभम् ' इति । आत्रेया वसूयुनामान ऋषयः । अनुष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । प्रातःसवनेऽच्छावाकवदस्वेत्युक्ते “ अच्छा वो अग्निमवसे' इत्यृचमनुब्रूयात् । तथा च सूत्रितम् -‘ अच्छा वो अग्निमवस इत्यृचमन्वाह' ( आश्व. श्रौ. ५. ७ ) इति ॥

अच्छा॑ वो अ॒ग्निमव॑से दे॒वं गा॑सि॒ स नो॒ वसुः॑ ।

रास॑त्पु॒त्र ऋ॑षू॒णामृ॒तावा॑ पर्षति द्वि॒षः ॥१

अच्छ॑ । व॒ः । अ॒ग्निम् । अव॑से । दे॒वम् । गा॒सि॒ । सः । न॒ः । वसु॒ः॑ ।

रास॑त् । पु॒त्रः । ऋ॒षू॒णाम् । ऋ॒तऽवा॑ । प॒र्ष॒ति॒ । द्वि॒षः ॥१

अच्छ । वः । अग्निम् । अवसे । देवम् । गासि । सः । नः । वसुः ।

रासत् । पुत्रः । ऋषूणाम् । ऋतऽवा । पर्षति । द्विषः ॥१

हे वसूयवः “वः यूयं “देवम् “अग्निम् “अवसे रक्षणाय “अच्छा “गासि अभिगायत । “वसुः अग्निहोत्रार्थं यजमानानां गृहे वासयिता “सः अग्निः “नः अस्मभ्यं “रासत् कामान् ददातु । “ऋषूणाम् ऋषीणां “पुत्रः । ऋषिभिर्मन्थनेन जनितत्वात् पुत्र इत्युपचर्यते । “ऋतावा ऋतावान् सत्यवानुदकवान्वा सोऽग्निः “द्विषः अस्माकं शत्रून् “पर्षति पारयतु ॥

स हि स॒त्यो यं पूर्वे॑ चि॒द्दे॒वास॑श्चि॒द्यमी॑धि॒रे ।

होता॑रं म॒न्द्रजि॑ह्व॒मित्सु॑दी॒तिभि॑र्वि॒भाव॑सुम् ॥२

सः । हि । स॒त्यः । यम् । पूर्वे॑ । चि॒त् । दे॒वासः॑ । चि॒त् । यम् । ई॒धि॒रे ।

होता॑रम् । म॒न्द्रऽजि॑ह्वम् । इत् । सु॒दी॒तिऽभिः॑ । वि॒भाऽव॑सुम् ॥२

सः । हि । सत्यः । यम् । पूर्वे । चित् । देवासः । चित् । यम् । ईधिरे ।

होतारम् । मन्द्रऽजिह्वम् । इत् । सुदीतिऽभिः । विभाऽवसुम् ॥२

“पूर्वे “चित् पूर्वे महर्षयः "होतारं देवानामाह्वातारं “मन्द्रजिह्वम् । हविषां प्रदानेन देवानां मादयित्री जिह्वा यस्य सः । तम् । यद्वा मोदनजिह्वम् । तथाह यास्कः- मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा' (निरु. ६. २३ (https://sa.wikisource.org/s/6zl) ) इति । “सुदीतिभिः शोभनदीप्तिभिर्युक्तं “विभावसुं प्रभाधनं “यम् अग्निम् ईधिरे समैन्धत “देवासश्चित् देवा अपि “यम् अग्निम् “ईधिरे समैन्धत “स “हि अग्निः “सत्यः भवति । सत्यप्रतिश्रवो भवति । “इत् इति पूरणः ॥

स नो॑ धी॒ती वरि॑ष्ठया॒ श्रेष्ठ॑या च सुम॒त्या ।

अग्ने॑ रा॒यो दि॑दीहि नः सुवृ॒क्तिभि॑र्वरेण्य ॥३

सः । न॒ः । धी॒ती । वरि॑ष्ठया । श्रेष्ठ॑या । च॒ । सु॒ऽम॒त्या ।

अग्ने॑ । रा॒यः । दि॒दी॒हि॒ । न॒ः । सु॒वृ॒क्तिऽभिः॑ । व॒रे॒ण्य॒ ॥३

सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सुऽमत्या ।

अग्ने । रायः । दिदीहि । नः । सुवृक्तिऽभिः । वरेण्य ॥३

"सुवृक्तिभिः स्तुतिभिः स्तूयमान “वरेण्य वरणीय हे “अग्ने “सः त्वं वरिष्ठया वरतमेन “श्रेष्ठया अतिशयेन प्रशस्येन “नो “धीती धीत्यास्मदीयेन परिचरणात्मकेन कर्मणा सुमत्या “च । सुमतिरिति शस्त्रमुच्यते । शस्त्रेण च प्रीतः सन् "रायः धनानि "नः अस्मभ्यं "दीदिहि देहि ॥

अ॒ग्निर्दे॒वेषु॑ राजत्य॒ग्निर्मर्ते॑ष्वावि॒शन् ।

अ॒ग्निर्नो॑ हव्य॒वाह॑नो॒ऽग्निं धी॒भिः स॑पर्यत ॥४

अ॒ग्निः । दे॒वेषु॑ । रा॒ज॒ति॒ । अ॒ग्निः । मर्ते॑षु । आ॒ऽवि॒शन् ।

अ॒ग्निः । नः॒ । ह॒व्य॒ऽवाह॑नः । अ॒ग्निम् । धी॒भिः । स॒प॒र्य॒त॒ ॥४

अग्निः । देवेषु । राजति । अग्निः । मर्तेषु । आऽविशन् ।

अग्निः । नः । हव्यऽवाहनः । अग्निम् । धीभिः । सपर्यत ॥४

यः "अग्निः "देवेषु देवानां मध्ये "राजति देवतारूपेण प्रकाशते । यः "अग्निः "मर्तेषु मनुष्येषु "आविशन् आहवनीयादिरूपेण प्रविष्टो भवति । यः "अग्निः "नः अस्माकं "हव्यवाहनः भवति अस्मदीयेषु यज्ञेषु देवतार्थं हव्यानां वोढा भवति । हे यजमानास्तम् "अग्निं "धीभिः स्तुतिभिः "सपर्यत परिचरत ॥

पुत्रकामेष्ट्याम् 'अग्निस्तुविश्रवस्तमम्' इति द्वे स्विष्टकृतो याज्यानुवाक्ये । सूत्रितं च-- ' अग्निस्तुविश्रवस्तममिति द्वे संयाज्ये ' ( आश्व. श्रौ. २. १०) इति ॥

अ॒ग्निस्तु॒विश्र॑वस्तमं तु॒विब्र॑ह्माणमु॒त्त॒मम् ।

अ॒तूर्तं॑ श्राव॒यत्प॑तिं पु॒त्रं द॑दाति दा॒शुषे॑ ॥५

अ॒ग्निः । तु॒विश्र॑वःऽतमम् । तु॒विऽब्र॑ह्माणम् । उ॒त्ऽत॒मम् ।

अ॒तूर्त॑म् । श्र॒व॒यत्ऽप॑तिम् । पु॒त्रम् । द॒दा॒ति॒ । दा॒शुषे॑ ॥५

अग्निः । तुविश्रवःऽतमम् । तुविऽब्रह्माणम् । उत्ऽतमम् ।

अतूर्तम् । श्रवयत्ऽपतिम् । पुत्रम् । ददाति । दाशुषे ॥५

"अग्निः "तुविश्रवस्तमम् अतिशयेन बह्वन्नं "तुविब्रह्माणं बहुस्तोत्रम् "उत्तमम् उत्कृष्टम् "अतूर्तं शत्रुभिरहिंसितं "श्रावयत्पतिम् । श्रावयति विश्रुतान् करोति पतीन् पालयितॄन् पितॄनिति स्वकर्मणा पितॄणां प्रख्यापक इति श्रावयत्पतिः । तथाविधं "पुत्रं "दाशुषे हवींषि दत्तवते यजमानाय "ददाति ददातु ॥ ॥ १७ ॥

अ॒ग्निर्द॑दाति॒ सत्प॑तिं सा॒साह॒ यो यु॒धा नृभि॑ः ।

अ॒ग्निरत्यं॑ रघु॒ष्यदं॑ जेता॑र॒मप॑राजितम् ॥६

अ॒ग्निः । द॒दा॒ति॒ । सत्ऽप॑तिम् । स॒साह॑ । यः । यु॒धा । नृऽभिः॑ ।

अ॒ग्निः । अत्य॑म् । र॒घु॒ऽस्यद॑म् । जेता॑रम् । अप॑राऽजितम् ॥६

अग्निः । ददाति । सत्ऽपतिम् । ससाह । यः । युधा । नृऽभिः ।

अग्निः । अत्यम् । रघुऽस्यदम् । जेतारम् । अपराऽजितम् ॥६

"यः पुत्रः “युधा युद्धेन "नृभिः परिजनैः “ससाह शत्रूनभिभवति "सत्पतिं सतां पालयितारं तथाविधं पुत्रम् “अग्निर्ददाति अस्मभ्यं ददातु । किंच “अग्निः “रघुष्यदम् । रघुर्लघुः स्यदो जवो यस्य तम् । “जेतारं शत्रून् “अपराजितं (https://puranastudy.angelfire.com/pur_index2/aparaajit.htm) शत्रुभिः “अत्यम् । अतति सततं गच्छतीत्यत्योऽश्वः । तं ददातु ॥

अश्वमेधे पौष्ण्यामिष्टौ ‘यद्वाहिष्ठम्' इति स्विष्टकृतो याज्या । सूत्रितं च - ‘ यद्वाहिष्ठं तदग्नय इति संयाज्ये ' ( आश्व. श्रौ. १०. ६ ) इति ॥

यद्वाहि॑ष्ठं॒ तद॒ग्नये॑ बृ॒हद॑र्च विभावसो ।

महि॑षीव॒ त्वद्र॒यिस्त्वद्वाजा॒ उदी॑रते ॥७

यत् । वाहि॑ष्ठम् । तत् । अ॒ग्नये॑ । बृ॒हत् । अ॒र्च॒ । वि॒भा॒व॒सो॒ इति॑ विभाऽवसो ।

महि॑षीऽइव । त्वत् । र॒यिः । त्वत् । वाजाः॑ । उत् । ई॒र॒ते॒ ॥७

यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसो इति विभाऽवसो ।

महिषीऽइव । त्वत् । रयिः । त्वत् । वाजाः । उत् । ईरते ॥७

“वाहिष्ठं वोढृतमं “यत् स्तोत्रं तदग्नये क्रियते । अतो हे “विभावसो प्रभाधनाग्ने “बृहत् बह्वन्नं धनं च "अर्च अस्मभ्यं प्रयच्छ । कथमस्यान्नधनप्रदातृत्वमित्यपेक्षायामाह । यतः “त्वत् त्वत्तः सकाशात् “महिषी महती “रयिः धनम् “उदीरते उद्गच्छति । “वाजाः अन्नानि च “त्वत् त्वत्तः उदीरते उद्गच्छन्ति । इवेति पूरणः ॥

तव॑ द्यु॒मन्तो॑ अ॒र्चयो॒ ग्रावे॑वोच्यते बृ॒हत् ।

उ॒तो ते॑ तन्य॒तुर्य॑था स्वा॒नो अ॑र्त॒ त्मना॑ दि॒वः ॥८

तव॑ । द्यु॒ऽमन्तः॑ । अ॒र्चयः॑ । ग्रावा॑ऽइव । उ॒च्य॒ते॒ । बृ॒हत् ।

उ॒तो इति॑ । ते॒ । त॒न्य॒तुः । य॒था॒ । स्वा॒नः । अ॒र्त॒ । त्मना॑ । दि॒वः ॥८

तव । द्युऽमन्तः । अर्चयः । ग्रावाऽइव । उच्यते । बृहत् ।

उतो इति । ते । तन्यतुः । यथा । स्वानः । अर्त । त्मना । दिवः ॥८

हे अग्ने “तव “अर्चयः रश्मयः “द्युमन्तः दीप्तिमन्तो भवन्ति। “बृहत् महान् त्वं “ग्रावेव अभिषवग्रावेव “उच्यते स्तूयसे । “उतो अपि च “त्मना आत्मना “दिवः द्योतमानस्य “ते तव “स्वानः शब्दः “तन्यतुर्यथा मेघगर्जितमिव “अर्त उद्गच्छति ॥

ए॒वाँ अ॒ग्निं व॑सू॒यव॑ः सहसा॒नं व॑वन्दिम ।

स नो॒ विश्वा॒ अति॒ द्विष॒ः पर्ष॑न्ना॒वेव॑ सु॒क्रतु॑ः ॥९

ए॒व । अ॒ग्निम् । व॒सु॒ऽयवः॑ । स॒ह॒सा॒नम् । व॒व॒न्दि॒म॒ ।

सः । नः॒ । विश्वा॑ । अति॑ । द्विषः॑ । पर्ष॑त् । ना॒वाऽइ॑व । सु॒ऽक्रतुः॑ ॥९

एव । अग्निम् । वसुऽयवः । सहसानम् । ववन्दिम ।

सः । नः । विश्वा । अति । द्विषः । पर्षत् । नावाऽइव । सुऽक्रतुः ॥९

“वसूयवः वसुकामा वयं “सहसानम् अस्माकं बलमाचरन्तम् “अग्निम् एवमुक्तप्रकारेण “ववन्दिम स्तुमः । “सुक्रतुः शोभनकर्मा “सः अग्निः “नः अस्मान् “विश्वाः सर्वान् "द्विषः शत्रून् “अति “पर्षत अतिपारयतु । कथमिव । "नावा साधनेन सिन्धुम् “इव ॥ ॥ १८ ॥

**टिप्पणी**

५.२५.७ यद् वाहिष्ठं इति

यद्वाहिष्ठम् (https://sa.wikisource.org/s/3gu)

# ऋग्वेदः सूक्तं ५.२६

ऋग्वेदः - मण्डल ५
← सूक्तं ५.२५ सूक्तं ५.२६ सूक्तं ५.२७ →
वसूयव आत्रेयाः

दे. अग्निः, ९ विश्वे देवाः। गायत्री।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।

आ देवान्वक्षि यक्षि च ॥१॥

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।

देवाँ आ वीतये वह ॥२॥

वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि ।

अग्ने बृहन्तमध्वरे ॥३॥

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये ।

होतारं त्वा वृणीमहे ॥४॥

यजमानाय सुन्वत आग्ने सुवीर्यं वह ।

देवैरा सत्सि बर्हिषि ॥५॥

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि ।

देवानां दूत उक्थ्यः ॥६॥

न्यग्निं जातवेदसं होत्रवाहं यविष्ठ्यम् ।

दधाता देवमृत्विजम् ॥७॥

प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ।

स्तृणीत बर्हिरासदे ॥८॥

एदं मरुतो अश्विना मित्रः सीदन्तु वरुणः ।

देवासः सर्वया विशा ॥९॥

**सायणभाष्यम्**

‘ अग्ने पावक ' इति नवर्चं द्वादशं सूक्तम् । वसूयव ऋषयः । गायत्री छन्दः । अग्निर्देवता । तथा चानुक्रान्तम्- ‘ अग्ने गायत्रम्' इति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च - अग्ने पावक दूतं व इति सूक्ते' (आश्व. श्रौ. ४, १३ ) इति । आधाने द्वितीयायामिष्टौ प्रथमस्य हविषः • अग्ने पावक' इत्येषा याज्या । सूत्रितं च - ‘ स नः पावक दीदिवोऽग्ने पावक रोचिषा ' ( आश्व. श्रौ. २. १ ) इति ॥

अग्ने॑ पावक रो॒चिषा॑ म॒न्द्रया॑ देव जि॒ह्वया॑ ।

आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥१

अग्ने॑ । पा॒व॒क॒ । रो॒चिषा॑ । म॒न्द्रया॑ । दे॒व॒ । जि॒ह्वया॑ ।

आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥१

अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया ।

आ । देवान् । वक्षि । यक्षि । च ॥१

हे “पावक शोधक “रोचिषा स्वदीप्त्या “मन्द्रया देवानां मादयित्र्या “जिह्वया च हे “देव द्योतमान “अग्ने "देवान् "आ “वक्षि यज्ञार्थमावह । “यक्षि “च । तान् यज ॥

तं त्वां घृतस्नवीमहे चित्रंभानो स्वर्दृशम् ।

देवाँ आ वीतयें वह ॥२

तम् । त्वा । घृतस्नो इतिं घृतऽस्नो । ईमहे । चित्रंभानो इति चित्रंऽभानो । स्वःऽदृशंम् ।

देवान् । आ । वीतयें । वह ॥२

तम् । त्वा । घृतस्नो इति घृतऽस्नो । ईमहे । चित्रभानो इति चित्रऽभानो । स्वःऽदृशम् ।

देवान् । आ । वीतये । वह ॥२

हे “घृतस्नो घृतस्य प्रेरक । यद्वा घृतेन जनित । हे “चित्रभानो । चित्रा नानाविधा भानवो रश्मयो यस्यासौ चित्रभानुः । तस्य संबोधनम् । “स्वर्दृशं सर्वद्रष्टारं “तं “त्वा त्वाम् “ईमहे याचामहे । अतः "वीतये हविषां भक्षणाय "देवान् “आ “वह ॥

वीतिहोत्रं त्वा कवे द्युमन्तं समिंधीमहि ।

अग्नें बृहन्तंमध्वरे ॥३

वीतिऽहोंत्रम् । त्वा । कवे । द्युऽमन्तंम् । सम् । इधीमहि ।

अग्नें । बृहन्तंम् । अध्वरे ॥३

वीतिऽहोत्रम् । त्वा । कवे । द्युऽमन्तम् । सम् । इधीमहि ।

अग्ने । बृहन्तम् । अध्वरे ॥३

हे "कवे क्रान्तदर्शिन् “अग्ने “वीतिहोत्रं कान्तयज्ञं “द्युमन्तं दीप्तिमन्तं “बृहन्तं महान्तं “त्वा त्वाम् “अध्वरे यज्ञे “समिधीमहि समिद्भिः संदीपयामः ।।

अग्ने विश्वेंभिरा गंहि देवेभिंर्हव्यदांतये ।

होतांरं त्वा वृणीमहे ॥४

अग्नें । विश्वेंभिः । आ । गहि । देवेभिः । हव्यऽदांतये ।

होता॑रम् । त्वा॒ । वृ॒णी॒म॒हे॒ ॥४

अग्ने । विश्वे॑भिः । आ । गहि । देवेभिः । हव्यऽदातये ।

होतारम् । त्वा । वृणीमहे ॥४

हे "अग्ने "विश्वेभिः सर्वैः "देवेभिः देवैः सह त्वं "हव्यदातये हविषां दात्रे यजमानाय तदर्थम् "आ "गहि यज्ञं प्रत्यागच्छ । यतः "होतारं देवानामाह्वातारं "त्वा त्वां "वृणीमहे प्रार्थयामहे ॥

यज॑मानाय सुन्व॒त आग्ने॑ सु॒वीर्यं॑ वह ।

दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥५

यज॑मानाय । सु॒न्व॒ते । आ । अ॒ग्ने॒ । सु॒ऽवीर्य॑म् । व॒ह॒ ।

दे॒वैः । आ । स॒त्सि॒ । ब॒र्हिषि॑ ॥५

यजमानाय । सुन्वते । आ । अग्ने । सुऽवीर्यम् । वह ।

देवैः । आ । सत्सि । बर्हिषि ॥५

हे "अग्ने "सुन्वते अभिषवं कुर्वते "यजमानाय "सुवीर्यं शोभनं बलम् "आ "वह प्रापय । किंच "देवैः सह "बर्हिषि यज्ञे "आ "सत्सि आसीदेति ॥ ॥ १९ ॥

स॒मि॒धा॒नः स॑हस्रजि॒दग्ने॒ धर्मा॑णि पुष्यसि ।

दे॒वानां॑ दू॒त उ॒क्थ्यः॑ ॥६

स॒म्ऽइ॒धा॒नः । स॒ह॒स्र॒ऽजि॒त् । अग्ने॑ । धर्मा॑णि । पु॒ष्य॒सि॒ ।

दे॒वाना॑म् । दू॒तः । उ॒क्थ्यः॑ ॥६

सम्ऽइधानः । सहस्रऽजित् । अग्ने । धर्माणि । पुष्यसि ।

देवानाम् । दूतः । उक्थ्यः ॥६

हे "सहस्रजित् सहस्रस्य जेतः “अग्ने “समिधानः हविर्भिः समिध्यमानः “उक्थ्यः प्रशस्यस्त्वं "देवानां “दूतः सन् “धर्माणि नः कर्माणि यज्ञादिक्रियाः “पुष्यसि पोषयसि ॥

न्य१॒ग्निं जा॒तवे॑दसं होत्र॒वाहं॒ यवि॑ष्ठ्यम् ।

दधा॑ता दे॒वमृ॒त्विजं॑म् ॥७

नि । अ॒ग्निम् । जा॒तऽवे॑दसम् । हो॒त्र॒ऽवाह॑म् । यवि॑ष्ठ्यम् ।

दधा॑त । दे॒वम् । ऋ॒त्विजं॑म् ॥७

नि । अग्निम् । जातऽवेदसम् । होत्रऽवाहम् । यविष्ठ्यम् ।

दधात । देवम् । ऋत्विजम् ॥७

हे यजमानाः "जातवेदसम् । जातानि भूतानि वेत्तीति जातवेदाः । तं “होत्रवाहं होत्रस्य यज्ञस्य वोढारं “यविष्ठ्यं युवतमं “देवं द्योतमानम् “ऋत्विजम् ऋतौ यष्टारम् “अग्निं “नि “धात निधत्त ॥

प्र य॒ज्ञ ए॑त्वानु॒षग॒द्या दे॒वव्य॑चस्तमः ।

स्तृ॒णी॒त ब॒र्हिरा॒सदे॑ ॥८

प्र । य॒ज्ञः । ए॒तु॒ । आ॒नु॒षक् । अ॒द्य । दे॒वव्य॑चःऽतमः ।

स्तृ॒णी॒त । ब॒र्हिः । आ॒ऽसदे॑ ॥८

प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ।

स्तृणीत । बर्हिः । आऽसदे ॥८

“अद्य अस्मिन्नहनि “देवव्यचस्तमः देवैः प्रकाशमानैः स्तोतृभिः व्याप्ततमः “यज्ञः यज्ञसाधनं हविः “आनुषक् अनुषक्तं यथा भवति तथा “प्र “एतु देवान् गच्छतु । हे ऋत्विजः “आसदे अग्नेरासदनार्थं “बर्हिः स्तृणीत ॥

एदं म॒रुतो॑ अ॒श्विना॑ मि॒त्रः सी॑दन्तु॒ वरु॑णः ।

दे॒वास॒ः सर्व॑या वि॒शा ॥९

आ । इ॒दम् । म॒रुत॑ः । अ॒श्विना॑ । मि॒त्रः । सी॒द॒न्तु॒ । वरु॑णः ।

दे॒वास॑ः । सर्व॑या । वि॒शा ॥९

आ । इदम् । मरुतः । अश्विना । मित्रः । सीदन्तु । वरुणः ।

देवासः । सर्वया । विशा ॥९

"मरुतः मरुद्गणाः "अश्विना अश्विनौ देवानां भिषजौ "मित्रः सूर्यः "वरुणः च "देवासः एते सर्वे देवाः "सर्वया "विशा समस्तेन स्वीयेन परिजनेन सार्धम् "इदं बर्हिः "आ "सीदन्तु ॥॥२०॥

**टिप्पणी**

५.२६.१ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान्वक्षि यक्षि च

जिह्वा उपरि टिप्पणी (https://vedastudy.wixsite.com/puranastudy/%E0%A4%9C-%E0%A4%B9-%E0%A4%B5-jihvaa)

अयं तृचः यद्यपि सामवेदे १५२१ (https://sa.wikisource.org/s/3kq) आविर्भवति किन्तु अव्याकृतमेवास्ति।

ऽग्ने पावक रोचिषेति दक्षिणम्पक्षं स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरम्पावकं पावकमिति यद्वै शिवं शान्तं तत्पावकं शमयत्येवैनमेतत्। माश ९,१,२,३० (https://sa.wikisource.org/s/eyd) ।

आहवनीयोपस्थानम् - अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च (ऋ. ५.२६.१)॥ स नः पावक दीदिवो ऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश् च नः (ऋ. १.१२.१०) ॥ अग्निः शुचिव्रततमः शुचिर् विप्रः शुचिः कविः । शुची रोचत आहुतः (ऋ. ८.४४.२१) ॥ - तैसं १.५.५.३ (https://sa.wikisource.org/s/1e2m)

अग्ने पावक रोचिषेत्य - अन्नं वै पावकम् - अन्नाद्येनैवैनं तत् समृद्धयन्ति। अथो वायुर् वै पावकः, प्राणो वै वायुर्, अभिपूर्वम् एवैनं तत् प्राणैस् समृद्धयन्ति।। जै २,१३७ (https://sa.wikisource.org/s/efk) ॥

# ऋग्वेदः सूक्तं ५.२७

ऋग्वेदः - मण्डल ५
← सूक्तं ५.२६ सूक्तं ५.२७ सूक्तं ५.२८ →
विश्ववारात्रेयी

दे. अग्निः। १, ३ त्रिष्टुप्, २ जगती, ४ अनुष्टुप्, ५-६ गायत्री

अनस्वन्ता सत्पतिर्मामहे मे गावा चेतिष्ठो असुरो मघोनः ।
त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥१॥
यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति ।
वैश्वानर सुष्टुतो वावृधानोऽग्ने यच्छ त्र्यरुणाय शर्म ॥२॥
एवा ते अग्ने सुमतिं चकानो नविष्ठाय नवमं त्रसदस्युः ।
यो मे गिरस्तुविजातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति ॥३॥
यो म इति प्रवोचत्यश्वमेधाय सूरये ।
दददृचा सनिं यते ददन्मेधामृतायते ॥४॥
यस्य मा परुषाः शतमुद्धर्षयन्त्युक्षणः ।
अश्वमेधस्य दानाः सोमा इव त्र्याशिरः ॥५॥

इन्द्राग्नी शतदाव्न्यश्वमेधे सुवीर्यम् ।

क्षत्रं धारयतं बृहद्दिवि सूर्यमिवाजरम् ॥६॥

**सायणभाष्यम्**

'अनस्वन्ता' इति षड्टचं त्रयोदशं सूक्तम् । अत्रानुक्रमणिका -- अनस्वन्ता षट् त्रैवृष्णपौरुकुत्स्यौ द्वौ त्र्यरुणत्रसदस्यू राजानौ भारतश्चाश्वमेधोऽन्त्यास्तिस्रोऽनुष्टुभो नात्मात्मने दद्यादिति सर्वास्वत्रिं केचिदन्त्यैन्द्राग्नी' इति । त्रिवृष्णस्य पुत्रस्त्र्यरुणः पुरुकुत्सस्य पुत्रस्त्रसदस्युर्भरतस्य पुत्रोऽश्वमेध एते त्रयोऽपि राजानः संभूयास्य सूक्तस्य ऋषयः । यद्वा । अत्रिरेव ऋषिः । आद्यास्तिस्रस्त्रिष्टुभः चतुर्थ्याद्यास्तिस्रोऽनुष्टुभः । षष्ठीन्द्राग्निदेवत्या शिष्टाः पञ्चाग्नेय्यः । विनियोगो लैङ्गिकः ॥

अन॑स्वन्ता॒ सत्प॑तिर्मामहे मे॒ गावा॒ चेति॑ष्ठो॒ असु॑रो म॒घोन॑ः ।

त्रै॒वृ॒ष्णो अ॑ग्ने द॒शभि॑ः स॒हस्रै॒र्वैश्वा॑नर॒ त्र्य॑रुणश्चिकेत ॥१

अन॑स्वन्ता । सत्ऽप॑तिः । म॒म॒हे॒ । मे॒ । गावा॑ । चेति॑ष्ठः । असु॑रः । म॒घोनः॑ ।

त्रै॒वृ॒ष्णः । अ॒ग्ने॒ । द॒शऽभिः॑ । स॒हस्रैः॑ । वैश्वा॑नर । त्रिऽअ॑रुणः । चि॒के॒त॒ ॥१

अनस्वन्ता । सत्ऽपतिः । ममहे । मे । गावा । चेतिष्ठः । असुरः । मघोनः ।

त्रैवृष्णः । अग्ने । दशऽभिः । सहस्रैः । वैश्वानर । त्रिऽअरुणः । चिकेत ॥१

अत्री राजर्षीणां दानमग्नेः पुरतोऽनेन सूक्तेनावर्णयत् । हे “वैश्वानर विश्वेषां नराणां नेतः “अग्ने “सत्पतिः सतां पालयिता “चेतिष्ठः ज्ञातृतमः "असुरः बलवान् “मघोनः मघवा धनवान् ॥ प्रथमार्थे ङसिः ॥ “त्रैवृष्णः त्रिवृष्णपुत्रः “त्र्यरुणः त्र्यरुणः इत्येतन्नामा राजर्षिः “अनस्वन्ता अनस्वन्तौ अनसा शकटेन संयुक्तौ “गावा गावावनड्वाहौ गवां हिरण्यानां वा “दशभिः “सहस्रैः सह “मे मह्यं “ममहे ददौ । “ महि दाने '। स राजर्षिः “चिकेत सर्वैर्जनैरनेन दानेन ज्ञायते ॥

यो मे॑ श॒ता च॑ विंश॒तिं च॒ गोनां॒ हरी॑ च यु॒क्ता सु॒धुरा॒ ददा॑ति ।

वैश्वा॑नर॒ सुष्टु॑तो वावृधा॒नोऽग्ने॒ यच्छ॒ त्र्य॑रुणाय॒ शर्म॑ ॥२

यः । मे॒ । श॒ता । च॒ । वि॒श॒तिम् । च॒ । गोना॑म् । हरी॒ इति॑ । च॒ । यु॒क्ता । सु॒ऽधुरा॑ । ददा॑ति ।

वैश्वा॑नर । सुऽस्तु॒तः । व॒वृ॒धा॒नः । अग्ने॑ । यच्छ॑ । त्रिऽअ॑रुणाय । शर्म॑ ॥२

यः । मे । शता । च । विंशतिम् । च । गोनाम् । हरी इति । च । युक्ता । सुऽधुरा । ददाति ।

वैश्वानर । सुऽस्तुतः । ववृधानः । अग्ने । यच्छ । त्रिऽअरुणाय । शर्म ॥२

"यः त्र्यरुणः “शता "च शतानि सुवर्णानां “गोनां गवां “विंशतिं “च “युक्ता रथेन युक्तौ “सुधुरा सुधुरौ सुष्ठु धुरं वहन्तौ “हरी अश्वौ “च “मे मह्यं “ददाति अददात् हे “वैश्वानर “अग्ने "सुष्टुतः अस्माभिः सम्यक्स्तुतः “ववृधानः हविर्भिर्वर्धमानस्त्वं तस्मै “त्र्यरुणाय “शर्म सुखं “यच्छ प्रयच्छ ॥

ए॒वा तें॑ अग्ने सुम॒तिं च॑का॒नो नवि॑ष्ठाय नव॒मं त्र॒सद॑स्युः ।

यो मे॒ गिर॑स्तुविजा॒तस्य॑ पू॒र्वीर्यु॒क्तेना॒भि त्र्य॑रुणो गृ॒णाति॑ ॥३

ए॒व । ते॒ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । च॒का॒नः । नवि॑ष्ठाय । न॒व॒मम् । त्र॒सद॑स्युः ।

यः । मे॒ । गिरः॑ । तु॒वि॒ऽजा॒तस्य॑ । पू॒र्वीः । यु॒क्तेन॑ । अ॒भि । त्रिऽअ॑रुणः । गृ॒णाति॑ ॥३

एव । ते । अग्ने । सुऽमतिम् । चकानः । नविष्ठाय । नवमम् । त्रसदस्युः ।

यः । मे । गिरः । तुविऽजातस्य । पूर्वीः । युक्तेन । अभि । त्रिऽअरुणः । गृणाति ॥३

"यः “त्र्यरुणः “तुविजातस्य बह्वपत्यस्य “मे “पूर्वीः बह्वीः "गिरः स्तुतीः श्रुत्वा प्रीतः सन् “युक्तेन अभियुक्तेन मनसा “अभि “गृणाति इदं गृहाणेदं गृहाणेति यथा मां ब्रवीति “एव एवं हे “अग्ने “नविष्ठाय अत्यन्तं स्तुत्याय “ते तुभ्यं "नवमं नवतमां “सुमतिं स्तुतिं “चकानः कामयमानः “त्रसदस्युः अपि इदं गृहाणेदं गृहाणेति मां प्रार्थितवान् ॥

यो म॒ इति॑ प्र॒वोच॒त्यश्व॑मेधाय सू॒रये॑ ।

दद॑दृ॒चा स॒निं य॒ते दद॑न्मे॒धामृ॑ताय॒ते ॥४

यः । मे॒ । इति॑ । प्र॒ऽवोच॑ति । अश्व॑ऽमेधाय । सू॒रये॑ ।

दद॑त् । ऋ॒चा । स॒निम् । य॒ते । दद॑त् । मे॒धाम् । ऋ॒त॒ऽय॒ते ॥४

यः । मे । इति । प्रऽवोचति । अश्वऽमेधाय । सूरये ।

ददत् । ऋचा । सनिम् । यते । ददत् । मेधाम् । ऋतऽयते ॥४

“यः भिक्षमाणोऽर्थी “सूरये प्रेरकाय धनानां दात्रे वास्मै “अश्वमेधाय राजर्षये “मे मह्यं देहि “इति “प्रवोचति प्रब्रवीति । योऽश्वमेधं धनानि भिक्षते इत्यर्थः । “ऋचा अग्नेः स्तोत्रेण सह “यते आत्मनः समीपं गच्छते तस्मा अर्थिनेऽश्वमेधः “सनिं धनं “ददत् ददाति । हे अग्ने “ऋतायते यज्ञमिच्छते तस्मा अश्वमेधाय “मेधां यज्ञविषयां प्रज्ञां “ददत् देहि ॥

यस्यं मा परुषाः शतमुंद्धर्षयंन्त्युक्षणंः ।

अश्वंमेधस्य दानाः सोमां इव त्र्यांशिरः ॥५

यस्यं । मा । परुषाः । शतम् । उत्ऽहर्षयंन्ति । उक्षणंः ।

अश्वंऽमेधस्य । दानाः । सोमाःऽइव । त्रिऽआंशिरः ॥५

यस्य । मा । परुषाः । शतम् । उत्ऽहर्षयन्ति । उक्षणः ।

अश्वऽमेधस्य । दानाः । सोमाःऽइव । त्रिऽआशिरः ॥५

“यस्य येन "अश्वमेधस्य अश्वमेधेन “दानाः दत्ताः “परुषाः कामानां पूरकाः “शतम् “उक्षणः उक्षाणो बलीवर्दाः “मा माम् “उद्धर्षयन्ति उत्कर्षेण हर्षयन्ति हे अग्ने ते उक्षाणः “त्र्याशिरः । दधिसक्तुपयोरूपास्तिस्र आशिरोऽधिश्रयणसाधनभूता येषां ते त्र्याशिरः । “सोमाइव तव प्रीणनाय भवन्तु ॥

इन्द्राग्नी शतदाव्न्यश्वंमेधे सुवीर्यंम् ।

क्षत्रं धांरयतं बृहद्दिवि सूर्यंमिवाजरंम् ॥६

इन्द्राग्नी इतिं । शतऽदाव्निं । अश्वंऽमेधे । सुऽवीर्यंम् ।

क्षत्रम् । धारयतम् । बृहत् । दिवि । सूर्यंम्ऽइव । अजरंम् ॥६

इन्द्राग्नी इति । शतऽदाव्नि । अश्वऽमेधे । सुऽवीर्यम् ।

क्षत्रम् । धारयतम् । बृहत् । दिवि । सूर्यम्ऽइव । अजरम् ॥६

हे “इन्द्राग्नी “शतदाव्नि । शतमपरिमितमर्थिभ्यो धनं ददातीति शतदावा । तस्मिन् “अश्वमेधे राजर्षौ “सुवीर्यं शोभनवीर्यसहितं "बृहत् महत् “अजरं जरारहितं “क्षत्रं धनं “धारयतं निधारयतम् । कथमिव । “दिवि अन्तरिक्षे “सूर्यमिव ॥ ॥ २१ ॥

# ऋग्वेदः सूक्तं ५.२८



दे. अग्निः। १, ३ त्रिष्टुप्, २ जगती, ४ अनुष्टुप्, ५-६ गायत्री

---

समिद्धो अग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि भाति ।

एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा घृताची ॥१॥

समिध्यमानो अमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये ।

विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त इत्पुरः ॥२॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।

सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥३॥

समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम् ।

वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥४॥

समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर ।

त्वं हि हव्यवाळसि ॥५॥

आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे ।

वृणीध्वं हव्यवाहनम् ॥६॥

**सायणभाष्यम्**

‘ समिद्धो अग्निः' इति षड्चं चतुर्दशं सूक्तम् । अत्रेयमनुक्रमणिका - समिद्धो विश्ववारात्रेयी त्रिष्टुब्जगती त्रिष्टुबनुष्टुब्गायत्र्यौ ' इति । अत्रिगोत्रोत्पन्ना विश्ववारानामिका अस्य सूक्तस्य ऋषिः । आद्यातृतीये त्रिष्टुभौ द्वितीया जगती चतुर्थ्यनुष्टुबन्त्ये गायत्र्यौ । अग्निर्देवता । सूक्तविनियोगो लैङ्गिकः ॥

समिद्धो अ॒ग्निर्दि॒वि शो॒चिर॑श्रेत्प्र॒त्यङ्ङु॒षस॑मुर्वि॒या वि भा॑ति ।

एति॒ प्राची॑ वि॒श्ववा॑रा॒ नमो॑भिर्दे॒वाँ ईळा॑ना ह॒विषा॑ घृ॒ताची॑ ॥१

सम्ऽइ॑द्धः । अ॒ग्निः । दि॒वि । शो॒चिः । अ॒श्रे॒त् । प्र॒त्यङ् । उ॒षस॑म् । उ॒र्वि॒या । वि । भा॒ति॒ ।

एति॑ । प्राची॑ । वि॒श्वऽवा॑रा । नमः॑ऽभिः । दे॒वान् । ईळा॑ना । ह॒विषा॑ । घृ॒ताची॑ ॥१

सम्ऽइद्धः । अग्निः । दिवि । शोचिः । अश्रेत् । प्रत्यङ् । उषसम् । उर्विया । वि । भाति ।

एति । प्राची । विश्वऽवारा । नमःऽभिः । देवान् । ईळाना । हविषा । घृताची ॥१

“समिद्धः सम्यग्दीप्तः “अग्निः “दिवि द्योतमानेऽन्तरिक्षे “शोचिः तेजः “अश्रेत् श्रयति । तथा “उषसं “प्रत्यङ् उषसमभिमुखः सन् “उर्विया उरु विस्तीर्णं “वि “भाति विशेषेण भ्राजते । “नमोभिः स्तोत्रैः "देवान् इन्द्रादीन् “ईळाना स्तुवती “हविषा पुरोडाशादिलक्षणेन युक्त्या “घृताची घृताच्या स्रुचा सहिता "विश्ववारा सर्वमपि पापरूपं शत्रुं वारयित्र्येतन्नामिका “प्राची प्राङ्मुखी सती “एति । एवंभूतमग्निं प्रतिगच्छति ॥

स॒मि॒ध्यमा॑नो अ॒मृत॑स्य राजसि ह॒विष्कृ॒ण्वन्तं॑ सचसे स्व॒स्तये॑ ।

विश्वं॒ स ध॑त्ते॒ द्रवि॑णं॒ यमिन्व॑स्याति॒थ्यम॑ग्ने॒ नि च॑ धत्त॒ इत्पु॒रः ॥२

स॒म्ऽइ॒ध्यमा॑नः । अ॒मृत॑स्य । रा॒ज॒सि॒ । ह॒विः । कृ॒ण्वन्त॑म् । स॒च॒से॒ । स्व॒स्तये॑ ।

विश्व॑म् । सः । ध॒त्ते॒ । द्रवि॑णम् । यम् । इन्व॑सि । आ॒ति॒थ्यम् । अ॒ग्ने॒ । नि । च॒ । ध॒त्ते॒ । इत् । पु॒रः ॥२

सम्ऽइध्यमानः । अमृतस्य । राजसि । हविः । कृण्वन्तम् । सचसे । स्वस्तये ।

विश्वम् । सः । धत्ते । द्रविणम् । यम् । इन्वसि । आतिथ्यम् । अग्ने । नि । च । धत्ते । इत् । पुरः ॥२

हे अग्ने “समिध्यमानः सम्यगिध्यमानस्त्वम् “अमृतस्य उदकस्य राजसि ईशिष । तथा “हविष्कृण्वन्तं पुरोडाशादिहविष्कर्तारं यजमानं "स्वस्तये अविनाशाय “सचसे सेवसे । किंच “यं यजमानम् “इन्वसि गच्छसि “सः यजमानः “विश्वं समस्तं “द्रविणं पश्वादिलक्षणं धनं “धत्ते धारयति । अपि च हे “अग्ने “आतिथ्यम् अतिथिरूपस्य तव योग्यं हविः “पुरः “इत् तव पुरस्तादेव “नि “धत्ते “च स्थापयति च ॥

पवित्रेष्ट्यां स्विष्टकृतः ‘अग्ने शर्ध ' इति याज्या। सूत्र्यते हि - जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये ' ( आश्व. श्रौ. २. १२) इति । साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालमित्यत्राप्येषैव स्विष्टकृतो याज्या । सूत्रितं च-- ‘ जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये ' ( आश्व. श्रौ. २. १८) इति ॥

अग्ने॒ शर्ध॑ मह॒ते सौभ॑गाय॒ तव॑ द्यु॒म्नान्यु॑त्त॒मानि॑ सन्तु ।

सं जा॑स्प॒त्यं सु॒यम॒मा कृ॑णुष्व शत्रूय॒ताम॒भि ति॑ष्ठा॒ महाँ॑सि ॥३

अग्ने॑ । शर्ध॑ । म॒ह॒ते । सौभ॑गाय । तव॑ । द्यु॒म्नानि॑ । उ॒त्ऽत॒मानि॑ । स॒न्तु॒ ।

सम् । ज॒ःऽप॒त्यम् । सु॒ऽयम॑म् । आ । कृ॒णु॒ष्व॒ । श॒त्रु॒ऽय॒ताम् । अ॒भि । ति॒ष्ठ॒ । महाँ॑सि ॥३

अग्ने । शर्ध । महते । सौभगाय । तव । द्युम्नानि । उत्ऽतमानि । सन्तु ।

सम् । जःऽपत्यम् । सुऽयमम् । आ । कृणुष्व । शत्रुऽयताम् । अभि । तिष्ठ । महांसि ॥३

हे “अग्ने त्वं “महते प्रभूताय “सौभगाय अस्माकं शोभनधनत्वाय "शर्ध शत्रून् सहस्व । तथा “तव संबन्धीनि “द्युम्नानि धनानि तेजांसि वा “उत्तमानि उत्कृष्टानि “सन्तु भवन्तु । किंच हे अग्ने त्वं “जास्पत्यम् । जा जाया च पतिश्च जायापती । तयोः कर्म जास्पत्यम् । तत् “सुयमं सुष्ठु नियमनोपेतम् । अन्योन्यसंश्लिष्टमित्यर्थः । "सम् “आ “कृणुष्व सम्यक् कुरुष्व । अपि च “शत्रूयतां शत्रुमात्मन इच्छतां सपत्नानां “महांसि तेजांसि “अभि "तिष्ठ आक्रमस्व ॥

समि॑द्धस्य॒ प्रम॑ह॒सोऽग्ने॒ वन्दे॒ तव॒ श्रिय॑म् ।

वृ॒ष॒भो द्यु॒म्नवाँ॑ असि॒ सम॑ध्व॒रेष्वि॑ध्यसे ॥४

सम्ऽइ॑द्धस्य । प्रऽम॑हसः । अ॒ग्ने॒ । वन्दे॑ । तव॑ । श्रिय॑म् ।

वृ॒ष॒भः । द्यु॒म्नऽवा॑न् । अ॒सि॒ । सम् । अ॒ध्व॒रेषु॑ । इ॒ध्य॒से॒ ॥४

सम्ऽइद्धस्य । प्रऽमहसः । अग्ने । वन्दे । तव । श्रियम् ।

वृषभः । द्युम्नऽवान् । असि । सम् । अध्वरेषु । इध्यसे ॥४

हे “अग्ने “समिद्धस्य प्रवृद्धस्य “प्रमहसः प्रकृष्टतेजसः “तव संबन्धिनीं “श्रियं दीप्तिं “वन्दे । अहं यजमानः स्तौमि । “वृषभः कामानां वर्षिता त्वं “द्युम्नवान् “असि धनवान् भवसि । “अध्वरेषु यज्ञेषु “सम् “इध्यसे सम्यग्दीप्यसे ॥

दर्शपूर्णमासयोः ‘ समिद्धो अग्न आहुत' इति द्वे सामिधेन्यौ । सूत्रितं च - ' समिद्धो अग्न आहुतेति द्वे' (आश्व. श्रौ. १. २ ) इति ॥

समि॑द्धो अग्न आहुत दे॒वान्य॑क्षि स्वध्वर ।

त्वं हि ह॑व्य॒वाळसि॑ ॥५

सम्ऽइ॑द्धः । अ॒ग्ने॒ । आ॒ऽहु॒त॒ । दे॒वान् । य॒क्षि॒ । सु॒ऽअ॒ध्व॒र॒ ।

त्वम् । हि । ह॒व्य॒ऽवाट् । असि॑ ॥५

सम्ऽइद्धः । अग्ने । आऽहुत । देवान् । यक्षि । सुऽअध्वर ।

त्वम् । हि । हव्यऽवाट् । असि ॥५

हे “आहुत यजमानैः आ समन्तात् हुत हे "स्वध्वर शोभनयज्ञोपेत हे “अग्ने “समिद्धः सम्यग्दीप्तः “त्वं “देवान् द्योतमानानिन्द्रादीन् 'यक्षि यजस्व । “हि यस्मात् कारणात् हे अग्ने त्वं “हव्यवाट् “असि हव्यानां वोढा भवसि । अतः कारणात् देवान् यजस्वेति संबन्धः ॥

आ जु॑होता दुव॒स्यता॒ग्निं प्र॑य॒त्य॑ध्व॒रे ।

वृ॒णी॒ध्वं ह॑व्य॒वाह॑नम् ॥६

आ । जु॒हो॒त॒ । दु॒व॒स्यत॑ । अ॒ग्निम् । प्र॒ऽय॒ति । अ॒ध्व॒रे ।

वृ॒णी॒ध्वम् । ह॒व्य॒ऽवाह॑नम् ॥६

आ । जुहोत । दुवस्यत । अग्निम् । प्रऽयति । अध्वरे ।

वृणीध्वम् । हव्यऽवाहनम् ॥६

हे ऋत्विजो यूयम् “अध्वरे अस्मदीययागे “प्रयति प्रवृत्ते सति “हव्यवाहनं हविषां वोढारम् एतन्नामकम् “अग्निम् “आ “जुहोत आ समन्तात् जुहोत । तथा “दुवस्यत परिचरत । “वृणीध्वस् संभजध्वं च हव्यवाहनम् । हव्यवाहननामकस्यैवाग्नेर्देवतासंबन्धो यजमानैर्वरणीयत्वं च तैत्तिरीये स्पष्टमाम्नातं - ' त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम् । त एतर्ह्याशंसन्ते मां वरिष्यते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते' (तै. सं. २. ५. ८. ६ ) इति ॥ ॥ २२ ॥

# ऋग्वेदः सूक्तं ५.२९

ऋग्वेदः - मण्डल ५
← सूक्तं ५.२८ सूक्तं ५.२९ सूक्तं ५.३० →
गौरिवीतिः शाक्त्यः

दे. इन्द्रः, ९(प्रथमपादस्य) उशना वा। त्रिष्टुप्।

त्र्यर्यमा मनुषो देवताता त्री रोचना दिव्या धारयन्त ।
अर्चन्ति त्वा मरुतः पूतदक्षास्त्वमेषामृषिरिन्द्रासि धीरः ॥१॥
अनु यदीं मरुतो मन्दसानमार्चन्निन्द्रं पपिवांसं सुतस्य ।
आदत्त वज्रमभि यदहिं हन्नपो यह्वीरसृजत्सर्तवा उ ॥२॥
उत ब्रह्माणो मरुतो मे अस्येन्द्रः सोमस्य सुषुतस्य पेयाः ।
तद्धि हव्यं मनुषे गा अविन्ददहन्नहिं पपिवाँ इन्द्रो अस्य ॥३॥
आद्रोदसी वितरं वि ष्कभायत्संविव्यानश्चिद्भियसे मृगं कः ।
जिगर्तिमिन्द्रो अपजर्गुराणः प्रति श्वसन्तमव दानवं हन् ॥४॥
अध क्रत्वा मघवन्तुभ्यं देवा अनु विश्वे अददुः सोमपेयम् ।
यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे कः ॥५॥

नव यदस्य नवतिं च भोगान्साकं वज्रेण मघवा विवृश्चत् ।
अर्चन्तीन्द्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्याम् ॥६॥
सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि ।
त्री साकमिन्द्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमम् ॥७॥
त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः ।
कारं न विश्वे अह्वन्त देवा भरमिन्द्राय यदहिं जघान ॥८॥
उशना यत्सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥९॥
प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः ।
अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥१०॥
स्तोमासस्त्वा गौरिवीतेरवर्धन्नरन्धयो वैदथिनाय पिप्रुम् ।
आ त्वामृजिश्वा सख्याय चक्रे पचन्पक्तीरपिबः सोममस्य ॥११॥
नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः ।
गव्यं चिदूर्वमपिधानवन्तं तं चिन्नरः शशमाना अप व्रन् ॥१२॥
कथो नु ते परि चराणि विद्वान्वीर्या मघवन्या चकर्थ ।
या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥१३॥
एता विश्वा चकृवाँ इन्द्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या अस्ति तस्याः ॥१४॥
इन्द्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षम् ॥१५॥

**सायणभाष्यम्**

त्र्यर्यमा इति पञ्चदशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रमणिका- त्र्यर्यमा पञ्चोना गौरिवीतिः शाक्त्य ऐन्द्रमुशना यदौशनसो वा पादः इति । शक्तिगोत्रोत्पन्नो गौरिवीतिर्नाम ऋषिः । अनुक्तत्वात् त्रिष्टुप् । इन्द्रो देवता मण्डलादिपरिभाषया निवृत्तत्वात् । ' उशना यत्सहस्यैः ' इति पादः औशनस ऐन्द्रो वा । आभिप्लविके तृतीयेऽहनि मरुत्वतीये एतन्निविद्धानम् । सूत्रितं च-' तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यंदिनः ' ( आश्व. श्रौ. ७.७ (https://sa.wikisource.org/s/1byi) ) इति ।।

त्र्य॑र्य॒मा मनु॑षो दे॒वता॑ता॒ त्री रो॑च॒ना दि॒व्या धा॑रयन्त ।

अर्च॑न्ति त्वा म॒रुतः॑ पू॒तद॑क्षा॒स्त्वमे॑षा॒मृषि॑रिन्द्रासि॒ धीरः॑ ॥१

त्री । अ॒र्य॒मा । मनु॑षः । दे॒वऽता॑ता । त्री । रो॒च॒ना । दि॒व्या । धा॒र॒य॒न्त॒ ।

अर्च॑न्ति । त्वा॒ । म॒रुतः॑ । पू॒तऽद॑क्षाः । त्वम् । ए॒षा॒म् । ऋषिः॑ । इ॒न्द्र॒ । अ॒सि॒ । धीरः॑ ॥१

त्री । अर्यमा । मनुषः । देवऽताता । त्री । रोचना । दिव्या । धारयन्त ।

अर्चन्ति । त्वा । मरुतः । पूतऽदक्षाः । त्वम् । एषाम् । ऋषिः । इन्द्र । असि । धीरः ॥१

मनुषः मनोः संबन्धिनी देवताता देवतातौ यज्ञे त्री त्रीणि अर्यमा अर्यमाणि यानि तेजांसि सन्ति । तथा त्री त्रीणि रोचना रोचमानानि वाय्वग्निसूर्यात्मकानि दिव्या दिव्यान्यन्त- रिक्षे भवानि तानि तेजांसि धारयन्त मरुतो धारयन्ति । पूतदक्षाः शुद्धबलाः मरुतः त्वा त्वाम् अर्चन्ति स्तुवन्ति । हे इन्द्र धीरः धीमान् त्वमेषां मरुताम् ऋषिः असि द्रष्टा भवसि ।।

अनु॒ यदी॑ं म॒रुतो॑ मन्दसा॒नमार्च॒न्निन्द्रं॑ पपि॒वांसं॑ सु॒तस्य॑ ।

आद॑त्त॒ वज्र॑म॒भि यदहि॒ं हन्न॒पो य॒ह्वीर॑सृज॒त्सर्त॒वा उ॑ ॥२

अनु॑ । यत् । ई॒म् । म॒रुतः॑ । म॒न्द॒सा॒नम् । आर्च॑न् । इन्द्र॑म् । प॒पि॒ऽवांस॑म् । सु॒तस्य॑ ।

आ । अ॒द॒त्त॒ । वज्र॑म् । अ॒भि । यत् । अहि॑म् । हन् । अ॒पः । य॒ह्वीः । अ॒सृ॒ज॒त् । सर्त॒वै । ऊ॒ं इति॑ ॥२

अनु । यत् । ईम् । मरुतः । मन्दसानम् । आर्चन् । इन्द्रम् । पपिऽवांसम् । सुतस्य ।

आ । अदत्त । वज्रम् । अभि । यत् । अहिम् । हन् । अपः । यह्वीः । असृजत् । सर्तवै । ऊं इति ॥२

यत् यदा मरुतो मन्दसानं तृप्यन्तं सुतस्य अभिषुतं सोमं पपिवांसं पीतवन्तम् ईम् एनम् इन्द्रम् अनु आर्चन् अन्वस्तुवन् । तदेन्द्रः वज्रम् आदत्त आददौ । ततः यत् यदा अहिं वृत्रम् अभि हन् अभ्यहन् अभिहतवान् तदा यह्वीः महतीः क्षपः वृत्रेण निरुद्धान्युदकानि सर्तवै स्वैरत्वेन सर्तुं गन्तुम् असृजत् निरोधाच्चामुञ्चत् ।।

उ॒त ब्र॑ह्माणो मरुतो मे अ॒स्येन्द्र॒ः सोम॑स्य॒ सुषु॑तस्य पेयाः ।

तद्धि ह॒व्यं मनु॑षे॒ गा अवि॑न्द॒दह॒न्नहिं॑ पपि॒वाँ इन्द्रो॑ अस्य ॥३

उ॒त । ब्र॒ह्मा॒णः॒ । म॒रु॒तः॒ । मे॒ । अ॒स्य॒ । इन्द्रः॑ । सोम॑स्य । सुऽसु॑तस्य । पे॒या॒ः॒ ।

तत् । हि । ह॒व्यम् । मनु॑षे । गाः । अवि॑न्दत् । अह॑न् । अहि॑म् । प॒पि॒ऽवान् । इन्द्रः॑ । अ॒स्य॒ ॥३

उत । ब्रह्माणः । मरुतः । मे । अस्य । इन्द्रः । सोमस्य । सुऽसुतस्य । पेयाः ।

तत् । हि । हव्यम् । मनुषे । गाः । अविन्दत् । अहन् । अहिम् । पपिऽवान् । इन्द्रः । अस्य ॥३

उत अपि च हे ब्रह्माणः बृहन्तो हे मरुतः यूयम् इन्द्रः च सुसुतस्य सुष्ठ्वभिषुतस्य मे मदीयस्य अस्य सोमस्य इमं सोमम् ।। द्वितीयार्थे षष्ठी ।। पेयाः पिबत ।। पिबतेराशीर्लिङि मध्यमबहुवचनस्यैकवचनम् ।। तद्धि तत्खलु हव्यं युष्माभिः पीतं सोमात्मकं हविः मनुषे मनुष्याय यजमानाय गाः धेनूर्वृष्टिलक्षणान्युदकानि वा अविन्दत् वेदयति । यजमानं गा लम्भयतीत्यर्थः । किंच अस्य इमं सोमं पपिवान् पीतवान् इन्द्रः अहिं वृत्रम् अहन् अवधीत् ।।

आद्रोद॑सी वित॒रं वि ष्क॑भायत्संविव्या॒नश्चि॑द्भि॒यसे॑ मृ॒गं कः॑ ।

जिग॑र्ति॒मिन्द्रो॑ अप॒जर्गु॑राण॒ः प्रति॑ श्व॒सन्त॒मव॑ दान॒वं ह॑न् ॥४

आत् । रोद॑सी॒ इति॑ । वि॒ऽत॒रम् । वि । स्क॒भा॒य॒त् । स॒म्ऽवि॒व्या॒नः । चि॒त् । भि॒यसे॑ । मृ॒गम् । क॒रिति॑ कः ।

जिग॑र्तिम् । इन्द्रः॑ । अ॒प॒ऽजर्गु॑राणः । प्रति॑ । श्व॒सन्त॑म् । अव॑ । दा॒न॒वम् । ह॒न्निति॑ हन् ॥४

आत् । रोदसी इति । विऽतरम् । वि । स्कभायत् । सम्ऽविव्यानः । चित् । भियसे । मृगम् । करिति कः ।

जिगर्तिम् । इन्द्रः । अपऽजर्गुराणः । प्रति । श्वसन्तम् । अव । दानवम् । हन्निति हन् ॥४

इन्द्रः परमैश्वर्ययुक्तः आत् सोमपानानन्तरं रोदसी द्यावापृथिव्यौ वितरम् अतिशयेन ।। ' अमु च छन्दसि ' इति वेः तरपि कृते अमुप्रत्ययः ।। वि ष्कभायत् व्यस्तभ्नात् चलनरहिते अकरोत् । संविव्यानश्चित् संवृण्वानः संगच्छमानो वेन्द्रः ।। व्ययतेर्वा संवरणकर्मणो वेतेर्वा गतिकर्मणो रूपम् । चित् इति एवेत्यस्यार्थे वर्तते ।। मृगं मृगवत्पलायमानं वृत्रं भियसे भयाय कः अकार्षीत् । करोतेर्लुङि ' मन्त्रे घसह्वरः ' इत्यादिना च्लेर्लोपः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इत्यडभावः ।। इन्द्रः जिगर्तिं गिरन्तमाच्छादयन्तं श्वसन्तं भयार्थं श्वासं कुर्वन्तं दानवं दनोः पुत्रं वृत्रम् अपजर्गुराणः आच्छादनाद्विमोचयन् प्रति प्रतिगत्य अव हन् अवहतवान् ।।

अध॒ क्रत्वा॑ मघव॒न्तुभ्यं॑ दे॒वा अनु॒ विश्वे॑ अददुः सोम॒पेय॑म् ।

यत्सूर्य॑स्य ह॒रित॒ः पत॑न्तीः पु॒रः स॒तीरुप॑रा॒ एत॑शे॒ कः ॥५

अध॑ । क्रत्वा॑ । म॒घ॒ऽव॒न् । तुभ्य॑म् । दे॒वाः । अनु॑ । विश्वे॑ । अ॒द॒दु॒ः । सो॒म॒ऽपेय॑म् ।

यत् । सूर्य॑स्य । ह॒रितः॑ । पत॑न्तीः । पु॒रः । स॒तीः । उप॑राः । एत॑शे । करिति॒ कः ॥५

अध । क्रत्वा । मघऽवन् । तुभ्यम् । देवाः । अनु । विश्वे । अददुः । सोमऽपेयम् ।

यत् । सूर्यस्य । हरितः । पतन्तीः । पुरः । सतीः । उपराः । एतशे । करिति कः ॥५

अध अपि च हे मघवन् धनवन्निन्द्र क्रत्वा क्रतुना त्वदीयेन कर्मणा विश्वे सर्वे देवाः द्योतमाना वह्न्यादयः तुभ्यं त्वदर्थं सोमपेयं सोमपानम् अनु अददुः आनुपूर्व्येण दत्तवन्तः । ततः प्रभृतीन्द्रो देवेभ्यः सर्वेभ्योऽधिकोऽभवदित्यर्थः । तथा च श्रूयते-' स महान्भूत्वा देवता अब्रवी- दुद्धारं म उद्धरत ' (ऐ. ब्रा ३. २१) इत्यादि । हे इन्द्र यत् यस्त्वं पतन्तीः आगच्छन्तीः पुरः सतीः पुरस्ताद्भवन्तीः सूर्यस्य संबन्धिनीः हरितः वडवाः उपराः उपरता मन्दगतीः एतशे एतशाख्याय ऋषये कः अकार्षीः । एतशो हि स्वश्वपुत्रेण सूर्येण सह स्पर्धामकरोदिति यावत् । तथा च निगमान्तरे- प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ' ( ऋ. सं. १. ६१. १५) इति ।।

नव॒ यद॑स्य नव॒तिं च॑ भो॒गान्सा॒कं वज्रे॑ण म॒घवा॑ विवृ॒श्चत् ।

अर्च॒न्तीन्द्रं॑ म॒रुतः॑ स॒धस्थे॒ त्रैष्टु॑भेन॒ वच॑सा बाधत॒ द्याम् ॥६

नव॑ । यत् । अ॒स्य॒ । न॒व॒तिम् । च॒ । भो॒गान् । सा॒कम् । वज्रे॑ण । म॒घऽवा॑ । वि॒ऽवृ॒श्चत् ।

अर्च॑न्ति । इन्द्र॑म् । म॒रुतः॑ । स॒धऽस्थे॑ । त्रैस्तु॑भेन । वच॑सा । बा॒ध॒त॒ । द्याम् ॥६

नव । यत् । अस्य । नवतिम् । च । भोगान् । साकम् । वज्रेण । मघऽवा । विऽवृश्चत् ।

अर्चन्ति । इन्द्रम् । मरुतः । सधऽस्थे । त्रैस्तुभेन । वचसा । बाधत । द्याम् ॥६

यत् यदा मघवा धनवानिन्द्रः । अस्य इत्यनेन शम्बर उच्यते । अस्य शम्बरस्य संबन्धीनि नव नवसंख्याकानि नवतिं च नवतिसंख्याकानि च भोगान् पुराणि । भोगान् इत्यन्तोदात्तः पुरवचनः । साकं युगपदेव वज्रेण विवृश्चत् व्यवृश्चत् अभिनत् तदा मरुतः सधस्थे सहस्थाने युद्धे वा स्थितम् इन्द्रं त्रैष्टुभेन त्रिष्टुप्छन्दस्केन वचसा वाग्रूपेण स्तोत्रेण अर्चन्ति अस्तुवन् । इन्द्र एवं स्तुतः सन् द्यां मरुद्भिः प्रयुज्यमानेन मन्त्रेण दीप्तं शम्बराख्यमसुरं बाधत अबाधत पिपीडे ।।

सखा॒ सख्ये॑ अपच॒त्तूय॑म॒ग्निर॒स्य क्रत्वा॑ महि॒षा त्री श॒तानि॑ ।

त्री सा॒कमिन्द्रो॒ मनु॑ष॒ः सरां॑सि सु॒तं पि॑बद्वृत्र॒हत्या॑य॒ सोम॑म् ॥७

सखा॑ । सख्ये॑ । अ॒प॒च॒त् । तूय॑म् । अ॒ग्निः । अ॒स्य । क्रत्वा॑ । म॒हि॒षा । त्री । श॒तानि॑ ।

त्री । सा॒कम् । इन्द्रः॑ । मनु॑षः । सरां॑सि । सु॒तम् । पि॒ब॒त् । वृ॒त्र॒ऽहत्या॑य । सोम॑म् ॥७

सखा । सख्ये । अपचत् । तूयम् । अग्निः । अस्य । क्रत्वा । महिषा । त्री । शतानि ।

त्री । साकम् । इन्द्रः । मनुषः । सरांसि । सुतम् । पिबत् । वृत्रऽहत्याय । सोमम् ॥७

सखा इन्द्रस्य मित्रभूत् अग्निः महिषा महिषाणां पशूनां त्री त्रीणि शतानि शतसंख्या- कानि सख्ये सख्युर्मित्रभूतस्य अस्य इन्द्रस्य क्रत्वा कर्मणा निमित्तभूतेन तूयं क्षिप्रम् अपचत् पपाच । किंच इन्द्रः परमैश्वर्ययुक्तः मनुषः मनोः संबन्धीनि त्री त्रीणि सरांसि पात्राणि । अत्र सरःशब्देन पूतभृदाधवनीयद्रोणकलशसंज्ञानि पात्राण्युच्यन्ते । तेषु स्थितं सुतम् अभिषुतं सोमं साकं युगपदेव वृत्रहत्याय वृत्रहननाय पिबत् अपिबत् पपौ ।।

त्री यच्छ॒ता म॑हि॒षाणा॒मघो॒ मास्त्री सरां॑सि म॒घवा॑ सो॒म्यापाः॑ ।

का॒रं न विश्वे॑ अह्वन्त दे॒वा भर॒मिन्द्रा॑य॒ यदहिं॑ ज॒घान॑ ॥८

त्री । यत् । श॒ता । म॒हि॒षाणा॑म् । अघः॑ । माः । त्री । सरां॑सि । म॒घऽवा॑ । सो॒म्या । अपाः॑ ।

का॒रम् । न । विश्वे॑ । अ॒ह्व॒न्त॒ । दे॒वाः । भर॑म् । इन्द्रा॑य । यत् । अहि॑म् । ज॒घान॑ ॥८

त्री । यत् । शता । महिषाणाम् । अघः । माः । त्री । सरांसि । मघऽवा । सोम्या । अपाः ।

कारम् । न । विश्वे । अह्वन्त । देवाः । भरम् । इन्द्राय । यत् । अहिम् । जघान ॥८

हे इन्द्र त्वं यत् यदा त्री त्रयाणां शता शतसंख्याकानां महिषाणां पशूनां माः मांसानि अघः भक्षितवानसि ।। घसेरत्तेर्वा रूपम् ।। यदा च मघवा धनवांस्त्वं सोम्या सोममयानि त्री त्रीणि सरांसि पात्राणि पाः पीतवानसि । यत् यदेन्द्रः अहिं वृत्रं जघान हतवान् तदा विश्वे सर्वे देवाः भरं सोमपानादिना पूर्णम् इन्द्राय इन्द्रं युद्धार्थम् अह्वन्त आह्वयन्त । तत्र दृष्टान्तः । कारं न स्वामिनः कर्मकरमिव तद्वत् ।।

उशनसस्तोमे ' उशना यत्सहस्यैः ' इति मरुत्वतीये सूक्तमुखीया । सूत्रितं च-उशनस- स्तोमेन गरगीर्णमिवात्मानं मन्यमानो

यजेतोशना यत्सहस्यैरयातम्' ( आश्व. श्रौ. ९ .५ (https://sa.wikisource.org/s/1ava) ) इति ।।

उ॒शना॒ यत्स॑ह॒स्यै३॒॑रया॑तं गृ॒हमि॑न्द्र जूजुवा॒नेभि॒रश्वैः॑ ।

व॒न्वा॒नो अत्र॑ स॒रथं॑ ययाथ॒ कुत्से॑न दे॒वैरव॑नोर्ह॒ शुष्ण॑म् ॥९

उ॒शना॑ । यत् । स॒ह॒स्यैः॑ । अया॑तम् । गृ॒हम् । इ॒न्द्र॒ । जू॒जु॒वा॒नेभिः॑ । अश्वैः॑ ।

व॒न्वा॒नः । अत्र॑ । स॒ऽरथ॑म् । य॒या॒थ॒ । कुत्से॑न । दे॒वैः । अव॑नोः । ह॒ । शुष्ण॑म् ॥९

उशना । यत् । सहस्यैः । अयातम् । गृहम् । इन्द्र । जूजुवानेभिः । अश्वैः ।

वन्वानः । अत्र । सऽरथम् । ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णम् ॥९

यत् यदा हे इन्द्र त्वम् उशना काव्यश्च सहस्यैः अभिभवनशीलैः जूजुवानेभिः जूजुवानैर्गच्छद्भिः अश्वैः कुत्सस्य गृहम् अयातम् अगच्छत तदा हे इन्द्र त्वम् अत्र अस्मिन् काले वन्वानः शत्रून् हिंसन् कुत्सेन देवैः च सह सरथं समानमेकं रथं .ययाथ जगन्थ । किंच शुष्णम् एतन्नामानमसुरम् अवनोर्ह अहिंसीः खलु ।।

प्रान्यच्च॒क्रम॑वृह॒ः सूर्य॑स्य॒ कुत्सा॑या॒न्यद्वरि॑वो॒ यात॑वेऽकः ।

अ॒नासो॒ दस्यूँ॑रमृणो व॒धेन॒ नि दु॑र्यो॒ण आ॑वृणङ्मृ॒ध्रवा॑चः ॥१०

प्र । अ॒न्यत् । च॒क्रम् । अ॒वृ॒हः॒ । सूर्य॑स्य । कुत्सा॑य । अ॒न्यत् । वरि॑वः । यात॑वे । अ॒क॒रित्य॑कः ।

अ॒नासः॑ । दस्यू॑न् । अ॒मृ॒णः॒ । व॒धेन॑ । नि । दु॒र्यो॒णे । अ॒वृ॒ण॒क् । मृ॒ध्रऽवा॑चः ॥१०

प्र । अन्यत् । चक्रम् । अवृहः । सूर्यस्य । कुत्साय । अन्यत् । वरिवः । यातवे । अकरित्यकः ।

अनासः । दस्यून् । अमृणः । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचः ॥१०

हे इन्द्र पूर्वं द्विचक्रस्य सूर्यस्य अन्यत् एकं चक्रं प्र अवृहः पृथक् चकर्थ । अन्यत् एकं चक्रं कुत्साय कुत्सस्य वरिवः धनं यातवे प्राप्तुम् अकः अकार्षीः । किंच अनासः आस्यरहितान् । आस्यशब्देन शब्दो लक्ष्यते । अशब्दान् मूकान् दस्यून् असुरान् वधेन आयुधेन वज्रेण अमृणः अहिंसीः । दुर्योणे संग्रामे मृध्रवाचः हिंसितवागिन्द्रियानसुरान् नि अवृणक् नितरां छिन्नवानसि । अमृणो न्यवृणगिति द्विरुक्तिरादरार्था ।।

स्तोमा॑सस्त्वा॒ गौरि॑वीतेरवर्ध॒न्नर॑न्धयो वैदथि॒नाय॒ पिप्रु॑म् ।

आ त्वामृ॒जिश्वा॑ स॒ख्याय॑ चक्रे॒ पच॑न्प॒क्तीरपि॑ब॒ः सोम॑मस्य ॥११

स्तोमा॑सः । त्वा॒ । गौरि॑ऽवीतेः । अ॒व॒र्ध॒न् । अर॑न्धयः । वै॒द॒थि॒नाय॑ । पिप्रु॑म् ।

आ । त्वाम् । ऋ॒जिश्वा॑ । स॒ख्याय॑ । च॒क्रे॒ । पच॑न् । प॒क्तीः । अपि॑बः । सोम॑म् । अ॒स्य॒ ॥११

स्तोमासः । त्वा । गौरिऽवीतेः । अवर्धन् । अरन्धयः । वैदथिनाय । पिप्रुम् ।

आ । त्वाम् । ऋजिश्वा । सख्याय । चक्रे । पचन् । पक्तीः । अपिबः । सोमम् । अस्य ॥११

हे इन्द्र गौरिवीतेः एतन्नामकस्य मन्त्रद्रष्टुर्मम संबन्धीनि स्तोमासः स्तोत्राणि त्वा त्वाम् अवर्धन् वर्धयन्तु । वैदथिनाय विदथिनः पुत्राय ऋजिश्वनाम्ने पिप्रुम् एतन्नामकमसुरम् अरन्धयः वशमनयः । हे इन्द्र ऋजिश्वनामा कश्चिदृषिः सख्याय तव सखित्वाय पक्तीः पक्तव्यानि पुरोडाशादीनि पचन् पाकं कुर्वन् त्वाम् आ चक्रे अभिमुखीचकार । किंच त्वम् अस्य ऋजिश्वनः संबन्धिनं सोमम् अपिबः अपाः ।।

दशपेयेऽहनि मरुत्वतीये शस्त्रे ' नवग्वासः ' इति सूक्तमुखीया । सूत्रितं च-' नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये ' ( आश्व. श्रौ. ९ .३) इति ।।

नव॑ग्वासः सु॒तसो॑मास॒ इन्द्रं॒ दश॑ग्वासो अ॒भ्य॑र्चन्त्य॒र्कैः ।

गव्यं॑ चिदू॒र्वम॑पि॒धान॑वन्तं॒ तं चि॒न्नर॑ः शशमा॒ना अप॑ व्रन् ॥१२

नव॑ऽग्वासः । सु॒तऽसो॑मासः । इन्द्र॑म् । दश॑ऽग्वासः । अ॒भि । अ॒र्च॒न्ति॒ । अ॒र्कैः ।

गव्य॑म् । चि॒त् । ऊ॒र्वम् । अ॒पि॒धान॑ऽवन्तम् । तम् । चि॒त् । नर॑ः । श॒श॒मा॒नाः । अप॑ । व्र॒न् ॥१२

नवऽग्वासः । सुतऽसोमासः । इन्द्रम् । दशऽग्वासः । अभि । अर्चन्ति । अर्कैः ।

गव्यम् । चित् । ऊर्वम् । अपिधानऽवन्तम् । तम् । चित् । नरः । शशमानाः । अप । व्रन् ॥१२

नवग्वासः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । दशभिर्मासैः समाप्य ये गतास्ते दशग्वाः । एते उभयविधा अङ्गिरसः सुतसोमासः अभिषुतसोमाः सन्तः इन्द्रम् अर्कैः अर्चनीयैः स्तोत्रैः अभ्यर्चन्ति अभिष्टुवन्ति । तथा शशमानाः स्तुवन्तः नरः नेतारोऽङ्गिरसः अपिधानवन्तं बलेनासुरेणाच्छादितवन्तं तं चित् बहुषु प्रदेशेषु प्रसिद्धमपि गव्यं चित् गोसबन्धिनमपि ऊर्वं समूहम् अप व्रन् अपावृण्वन् ।।

परिक्रीनाम्न्येकाहे मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये ' कथो नु ते ' इत्याद्ये द्वे ऋचौ । । सूत्रितं च-' कथो नु ते परि चराणि

विद्वानिति द्वे ' (आश्व. श्रौ. ९. ५ (https://sa.wikisource.org/s/1ava) ) इति ।।

कथो नु ते परिं चराणि विद्वान्वीर्यां मघवन्या चकर्थं ।

या चो नु नव्यां कृणवः शविष्ठ प्रेदु ता तें विदथेंषु ब्रवाम ॥१३

कथो इतिं । नु । ते । परिं । चराणि । विद्वान् । वीर्यां । मघऽवन् । या । चकर्थं ।

या । चो इतिं । नु । नव्यां । कृणवः । शविष्ठ । प्र । इत् । ऊं इतिं । ता । ते । विदथेंषु । ब्रवाम ॥१३

कथो इति । नु । ते । परि । चराणि । विद्वान् । वीर्या । मघऽवन् । या । चकर्थ ।

या । चो इति । नु । नव्या । कृणवः । शविष्ठ । प्र । इत् । ऊं इति । ता । ते । विदथेषु । ब्रवाम ॥१३

हे मघवन् धनवन्निन्द्र त्वं या यानि वीर्या वीर्याणि चकर्थ चकृषे अहं तानि वीर्याणि अविद्वान् जानन् ते तुभ्यं कथो नु कथं नु परि चराणि परिचर्यां करवाणि । हे शविष्ठ बलवत्तमेन्द्र त्वं या चो यानि चैव नव्या नव्यानि नूतनानि वीर्याणि नु क्षिप्रं कृणवः कुर्याः ते त्वदीयानि ता तानि वीर्याणि विदथेषु यज्ञेषु प्रेदु ब्रवाम प्रैव वदाम ।।

एता विश्वां चकृवाँ इंन्द्र भूर्यपंरीतो जनुषां वीर्येंण ।

या चिन्नु वंज्रिन्कृणवों दधृष्वान्न तें वर्ता तविंष्या अस्ति तस्याः ॥१४

एता । विश्वां । चकृऽवान् । इन्द्र । भूरिं । अपंरिऽइतः । जनुषां । वीर्येंण ।

या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविंष्याः । अस्ति । तस्याः ॥१४

एता । विश्वा । चकृऽवान् । इन्द्र । भूरि । अपरिऽइतः । जनुषा । वीर्येण ।

या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥१४

हे इन्द्र अपरीतः शत्रुभिरपरिगतस्त्वं जनुषा जननसिद्धेनात्मीयेन वीर्येण बलेन भूरि भूरीणि बहूनि एता एतानि प्रत्यक्षेणोपलभ्यमानानि विश्वा विश्वानि व्याप्तानि भुवनजातानि चकृवान् कृतवानसि । हे वज्रिन् वज्रवन्निन्द्र दधृष्वान् सपत्नान् धर्षयंस्त्वं नु क्षिप्रं या चित् यानि च विश्वानि कृणवः कुर्याः ते त्वदीयस्य तस्याः तविष्याः तस्य बलस्य वर्ता निवारयिता न कोऽपि अस्ति ।।

इन्द्र ब्रह्मं क्रियमांणा जुषस्व या तें शविष्ठ नव्या अकंर्म ।

वस्त्रे॑व भ॒द्रा सुकृ॑ता वसू॒यू रथं॒ न धीरः॒ स्वपा॑ अतक्षम् ॥१५

इन्द्र॑ । ब्रह्म॑ । क्रि॒यमा॑णा । जु॒ष॒स्व॒ । या । ते॒ । श॒वि॒ष्ठ॒ । नव्याः॑ । अक॑र्म ।

वस्त्रा॑ऽइव । भ॒द्रा । सुऽकृ॑ता । व॒सु॒ऽयुः । रथ॑म् । न । धीरः॑ । सु॒ऽअपाः॑ । अ॒त॒क्ष॒म् ॥१५

इन्द्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ । नव्याः । अकर्म ।

वस्त्राऽइव । भद्रा । सुऽकृता । वसुऽयुः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् ॥१५

हे शविष्ठ बलवत्तम शूरतम वा इन्द्र ते तुभ्यं या यानि स्तोत्राणि नव्याः नूतना अद्यतना वयम् अकर्म अकुर्म हे इन्द्र त्वं क्रियमाणा अस्माभिः क्रियमाणानि ब्रह्म ब्रह्माणि तानि स्तोत्राणि जुषस्व सेवस्व । धीरः धीमान् स्वपाः शोभनकर्मा वसूयुः धनकामोऽहं वस्त्रेव वस्त्राणीव भद्रा भद्राणि भजनीयानि सुकृता सुष्ठु कृतानि स्तोत्राणि रथं न रथमिव अतक्षम् अकरवम् । स्तोत्राणि उपहारवत् ग्राह्याणीत्यभिप्रायेण वस्त्रनिदर्शनमुक्तम् । रथदृष्टान्तस्तु आगमन- साधनत्वप्रतिपादनाय । स्तोत्राणि स्वीकृत्य मह्यं धनं प्रयच्छेत्यर्थः ।।

**टिप्पणी**

गौरी उपरि पौराणिकसंदर्भाः (http://puranastudy.000space.com/pur_index10/pva23.htm)

गौरिवीति/गौरी उपरि टिप्पणी (http://puranastudy.000space.com/pur_index10/gauri.htm)

५.२९.१ त्र्यर्यमा मनुषो देवताता इति

अर्यमा उपरि पौराणिकसंदर्भाः (http://puranastudy.angelfire.com/pur_index2/pva20.htm)

अर्यमा उपरि टिप्पणी (http://puranastudy.angelfire.com/pur_index2/aryamaa.htm)

यथा आश्वलायनश्रौतसूत्रम्, शांखायनश्रौतसूत्रादि ग्रन्थेषु उल्लिखितमस्ति, अस्य सूक्तस्य विनियोगः अभिप्लवषडहस्य तृतीये अहनि माध्यन्दिनसवने अस्ति। ऐतरेयब्राह्मणे (५.१) तृतीयाह्नस्य मन्त्राणां लक्षणानां उल्लेखमस्ति - यद्वै समानोदर्कं तत्तृतीयस्याह्नो रूपं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यद्द्वैरूपं यज्जागतं यत्कृतमेतानि वै तृतीयस्याह्नो रूपाणि । ओंकारस्य तृतीयमक्षरं म अस्ति यस्योद्देश्यं तन्त्रे अनुपयोगी ऊर्जायाः सम्यग्रूपेण विसर्जनं अस्ति। व्यवहारे तृतीयअह्नः रूपं किं अस्ति, अस्मिन् विषये भागवतपुराणस्य तृतीयः स्कन्धस्य चित्रं साहाय्यं कर्तुं शक्यते। तृतीये स्कन्धे कर्दमऋषेः विवाहं देवहूतिना सह भवति एवं कर्दमः तस्यां सह विमाने

विहारं करोति। कर्दमः - पङ्कः। पापपूर्णे पङ्के अपि देवानां आवाहनस्य सामर्थ्यं अवतरति, अयं भावार्थः प्रतीयते। अर्यम्णः गतिः सामान्यरूपेण तिर्यक् - गतिरस्ति, पापानां शोधनम्। किन्तु अत्र त्रिरर्यमा - अर्यमा, वरुण एवं मित्र, एतेषां त्रयाणां गतिः ऊर्ध्वमुखी अस्ति।

अभिप्लवषडहस्य प्रथममहः (ऋ. ४.२१ )

अभिप्लवषडहस्य द्वितीयमहः(ऋ. ३.३२)

# ऋग्वेदः सूक्तं ५.३०


ऋग्वेदः - मण्डल ५

← सूक्तं ५.२९ | सूक्तं ५.३० | सूक्तं ५.३१ →

बभ्रुरात्रेयः


दे. इन्द्रः, १२-१५ ऋणंचयेन्द्रौ। त्रिष्टुप्।

---

क्व स्य वीरः को अपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् ।

यो राया वज्री सुतसोममिच्छन्तदोको गन्ता पुरुहूत ऊती ॥१॥

अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।

अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम ॥२॥

प्र नु वयं सुते या ते कृतानीन्द्र ब्रवाम यानि नो जुजोषः ।

वेददविद्वाञ्छृणवच्च विद्वान्वहतेऽयं मघवा सर्वसेनः ॥३॥

स्थिरं मनश्चकृषे जात इन्द्र वेषीदेको युधये भूयसश्चित् ।

अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणाम् ॥४॥

परो यत्त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत् ।

अतश्चिदिन्द्रादभयन्त देवा विश्वा अपो अजयद्दासपत्नीः ॥५॥

तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः ।
अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥६॥
वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्संचकानः ।
अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥७॥
युजं हि मामकृथा आदिदिन्द्र शिरो दासस्य नमुचेर्मथायन् ।
अश्मानं चित्स्वर्यं वर्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥८॥
स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः ।
अन्तर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिन्द्रः ॥९॥
समत्र गावोऽभितोऽनवन्तेहेह वत्सैर्वियुता यदासन् ।
सं ता इन्द्रो असृजदस्य शाकैर्यदीं सोमासः सुषुता अमन्दन् ॥१०॥
यदीं सोमा बभ्रुधूता अमन्दन्नरोरवीद्वृषभः सादनेषु ।
पुरंदरः पपिवाँ इन्द्रो अस्य पुनर्गवामददादुस्रियाणाम् ॥११॥
भद्रमिदं रुशमा अग्ने अक्रन्गवां चत्वारि ददतः सहस्रा ।
ऋणंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणाम् ॥१२॥
सुपेशसं माव सृजन्त्यस्तं गवां सहस्रै रुशमासो अग्ने ।
तीव्रा इन्द्रममन्दुः सुतासोऽक्तोर्व्युष्टौ परितक्म्यायाः ॥१३॥
औच्छत्सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानाम् ।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥१४॥
चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित्तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥१५॥

**सायणभाष्यम्**

‘ क्व स्य वीरः' इति पञ्चदशर्चं षोडशं सूक्तम् । अत्रानुक्रमणिका-- क्व स्य बभ्रुर्ऋणंचयोऽप्यत्र राजा स्तुतः' इति । बभ्रुर्ऋषिः । अनुक्तत्वात् त्रिष्टुप् । इन्द्रो देवता । ऋणंचयनामा राजापि क्वचित् स्तूयते । अतः सोऽपि देवता । तीव्रसोमाख्ये एकाहे मरुत्वतीयशस्त्रे इदं सूक्तं निविद्धानम् । सूत्रित च- तीव्रसोमेनान्नाद्यकामः क्व स्य वीरः ' ( आश्व. श्रौ. ९. ७ ) इति ॥

क्व१॒ स्य वी॒रः को अ॑पश्य॒दिंद्रं॑ सु॒खर॑थ॒मीय॑मानं॒ हरिं॑भ्यां ।

यो रा॒या व॒ज्री सु॒तसो॑ममि॒च्छंतदोको॒ गंता॑ पुरुहू॒त ऊ॒ती ॥१

क्व॑ । स्यः । वी॒रः । कः । अ॒प॒श्य॒त् । इन्द्र॑म् । सु॒खऽर॑थम् । ईय॑मानम् । हरिं॑ऽभ्याम् ।

यः । रा॒या । व॒ज्री । सु॒तऽसो॑मम् । इ॒च्छन् । तत् । ओकः॑ । गन्ता॑ । पु॒रु॒ऽहू॒तः । ऊ॒ती ॥१

क्व । स्यः । वीरः । कः । अपश्यत् । इन्द्रम् । सुखऽरथम् । ईयमानम् । हरिऽभ्याम् ।

यः । राया । वज्री । सुतऽसोमम् । इच्छन् । तत् । ओकः । गन्ता । पुरुऽहूतः । ऊती ॥१

“वज्री वज्रवान् “पुरुहूतः बहुभिराहूतः “यः इन्द्रः "राया देयेन धनेन सह "सुतसोममिच्छन् अभिषुतसोमं यजमानमन्विच्छन् “ऊती ऊत्यै रक्षायै “तत् तस्य यजमानस्य “ओकः गृहं “गन्ता प्राप्तो भवति "वीरः विक्रान्तः “स्यः स इन्द्रः “क्व कुत्र विद्यते । “सुखरथं शोभनाक्षद्वारः रथो यस्य स सुखरथः । सुष्ठु खनति लिखति भूमिमिति वा सुखम् । तादृग्रथम् । ‘सुहितं खेभ्यः खं पुनः खनतेः ' ( निरु. ३. १३ ) इति यास्कः । "हरिभ्यां स्ववाहनाभ्याम् अश्वाभ्याम् “ईयमानं गच्छन्तम् "इन्द्रं कोऽपश्यत् कश्च ददृशे ॥

अवा॑चचक्षं प॒दम॑स्य स॒स्वरु॒ग्रं निं॑धा॒तुरन्वा॑यमि॒च्छन् ।

अपृं॑च्छम॒न्याँ उ॒त ते म॑ आहु॒रिंद्रं॒ नरो॑ बुबुधा॒ना अ॑शेम ॥२

अव॑ । अ॒च॒च॒क्ष॒म् । प॒दम् । अ॒स्य॒ । स॒स्वः । उ॒ग्रम् । नि॒ऽधा॒तुः । अनु॑ । आ॒य॒म् । इ॒च्छन् ।

अपृं॑च्छम् । अ॒न्यान् । उ॒त । ते । मे॒ । आ॒हु॒ः । इन्द्र॑म् । नरः॑ । बु॒बु॒धा॒नाः । अ॒शे॒म॒ ॥२

अव । अचचक्षम् । पदम् । अस्य । सस्वः । उग्रम् । निऽधातुः । अनु । आयम् । इच्छन् ।

अपृच्छम् । अन्यान् । उत । ते । मे । आहुः । इन्द्रम् । नरः । बुबुधानाः । अशेम ॥२

“अस्य इन्द्रस्य “पदं स्थानम् “अवाचचक्षम् अहमवाद्राक्षम् । कीदृशम् । “सस्वः अन्तर्हितम् । “उग्रम् उद्गूर्णम् । किंच “इच्छन् इन्द्रमन्विच्छन्नहं “निधातुः स्वं स्थापयितुः अस्य इन्द्रस्य पदम् “अन्वायम् अन्वगमम् । “अन्यान् "उत अन्यान् विदुषोऽपि मार्गे इन्द्रम् “अपृच्छं पृष्टवानस्मि । पृष्टाः “ते “मे मह्यम् “इन्द्रम् “आहुः । किमाहुरित्युच्यते । “नरः यज्ञानां नेतारः “बुबुधानाः बुभुत्समाना वयम् “अशेम इन्द्रं प्राप्तवन्तः स्मः । यद्यपीन्द्रो विद्यते तथापि दुर्लभश्चेदनुपगन्तव्यः इति बुभुत्समानः स्वभावमपृच्छत् पृष्टैश्च सुलभः इत्युक्त इन्द्रप्राप्त्यर्थं सूक्तशेषमपश्यदित्यर्थः ॥

प्र नु व॒यं सु॒ते या तें कृ॒तानींद्र॒ ब्रवा॑म॒ यानिं नो॒ जुजों॑षः ।

वेद॒दविं॑द्वांछृ॒णवं॑च्च वि॒द्वान्वहं॑ते॒ऽयं म॒घवा॒ सर्वं॑सेनः ॥३

प्र । नु । व॒यम् । सु॒ते । या । ते॒ । कृ॒तानिं । इन्द्रं॑ । ब्रवा॑म । यानिं । न॒ः । जुजो॑षः ।

वेदं॑त् । अविं॑द्वान् । शृ॒णवं॑त् । च॒ । वि॒द्वान् । वहं॑ते । अ॒यम् । म॒घऽवा॑ । सर्वं॑ऽसेनः ॥३

प्र । नु । वयम् । सुते । या । ते । कृतानि । इन्द्र । ब्रवाम । यानि । नः । जुजोषः ।

वेदत् । अविद्वान् । शृणवत् । च । विद्वान् । वहते । अयम् । मघऽवा । सर्वऽसेनः ॥३

हे "इन्द्र “ते त्वदीयानि यानि “कृतानि कर्माणि सन्ति "नु अद्य “वयं स्तोतारः “सुते सोमेऽभिषुते सति तानि कर्माणि “प्र “ब्रवाम प्रकर्षेण वदाम । त्वमपि “नः अस्मदर्थं “यानि कर्माणि “जुजोषः असेवथाः तानि कर्माणि "अविद्वान् इतः पूर्वमजानन् जनः “वेदत् जानातु । “विद्वान् “शृणवच्च शृणुयाच्च । यद्वा विद्वान् जानन् पुरुषः शृणवच्च । अजानन्तमपि जनं श्रावयेच्च । “सर्वसेनः सर्वाभिः सेनाभिर्युक्तः “मघवा धनवान् विद्वान् जानन् “अयम् इन्द्रो जानतश्च शृण्वतश्च तान् जनान् प्रति "वहते अश्वैरुह्यते ॥ व्यत्ययेन कर्तृप्रत्ययः ॥ प्रापयति ॥

स्थि॒रं मनं॑श्चकृषे जा॒त इं॑द्र॒ वेषीदेको॑ यु॒धये॒ भूयं॑सश्चित् ।

अश्मा॑नं चि॒च्छवं॑सा दिद्युतो॒ वि वि॒दो गवा॑मू॒र्वमु॒स्रिया॑णां ॥४

स्थि॒रम् । मनः॑ । च॒कृ॒षे॒ । जा॒तः । इ॒न्द्र॒ । वेषिं॑ । इत् । एकः॑ । यु॒धयें॑ । भूयं॑सः । चि॒त् ।

अश्मा॑नम् । चि॒त् । शवं॑सा । दि॒द्यु॒तः॒ । वि । वि॒दः । गवा॑म् । ऊ॒र्वम् । उ॒स्रिया॑णाम् ॥४

स्थिरम् । मनः । चकृषे । जातः । इन्द्र । वेषि । इत् । एकः । युधये । भूयसः । चित् ।

अश्मानम् । चित् । शवसा । दिद्युतः । वि । विदः । गवाम् । ऊर्वम् । उस्रियाणाम् ॥४

हे “इन्द्र “जातः उत्पन्नमात्र एव त्वं “स्थिरं चलनरहितं “मनः चित्तं "चकृषे चकर्थ । सर्वान् बलिष्ठान् जयेयमितीदृशम् । तथा हे इन्द्र “एकः “इत् असहाय एव त्वं “युधये युद्धाय “भूयसश्चित् बहुतरान् राक्षसादीनपि "वेषि अवेः अगमः। किंच “अश्मानं चित् गवामावरकं पर्वतमपि "शवसा बलेन “वि "दिद्युतः व्यभिनः । किंच "उस्रियाणां क्षीरमुत्सारयन्तीनां “गवां धेनूनाम् “ऊर्वं समूहं "विदः अवेदयः अलम्भयः ॥

प॒रो यत्त्वं प॑र॒म आ॒जनि॑ष्ठाः परा॒वति॑ श्रु॒त्यं॒ नाम॒ बिभ्र॑त् ।

अत॑श्चि॒दिंद्रा॑दभयंत दे॒वा विश्वा॑ अ॒पो अ॑जयद्दा॒सप॑त्नीः ॥५

प॒रः । यत् । त्वम् । प॒र॒मः । आ॒ऽजनि॑ष्ठाः । प॒रा॒ऽवति॑ । श्रु॒त्य॑म् । नाम॑ । बिभ्र॑त् ।

अतः॑ । चि॒त् । इन्द्रा॑त् । अ॒भ॒य॒न्त॒ । दे॒वाः । विश्वाः॑ । अ॒पः । अ॒ज॒य॒त् । दा॒सऽप॑त्नीः ॥५

परः । यत् । त्वम् । परमः । आऽजनिष्ठाः । पराऽवति । श्रुत्यम् । नाम । बिभ्रत् ।

अतः । चित् । इन्द्रात् । अभयन्त । देवाः । विश्वाः । अपः । अजयत् । दासऽपत्नीः ॥५

“यत् यदा हे इन्द्र “परः परस्तादुपरिष्टात् स्थितः “परमः उत्कृष्टतमः “त्वं “परावति दूरे "श्रुत्यं श्रवणीयं “नाम नामधेयं “बिभ्रत् धारयन् “आजनिष्ठाः आ समन्तादजायथाः । शेषः परोक्षकृतः । “अतश्चित् अत आरभ्यैव “देवाः द्योतमानाः अग्न्यादयः “इन्द्रात् "अभयन्त बिभ्युः । "विश्वा “अपः सर्वाण्युदकानि इन्द्रः “अजयत् वशीचक्रे । कीदृशीः । “दासपत्नीः । दासो वृत्रः पतिः पालयिता यासामपां ता इति ॥ ॥ २६ ॥

तुभ्येदे॒ते म॒रुतः॑ सु॒शेवा॒ अर्चं॑त्य॒र्कं सु॒न्वंत्यंधः॑ ।

अहिं॑मोहा॒नम॒प आ॒शया॑नं॒ प्र मा॒याभि॑र्मा॒यिनं॑ सक्ष॒दिंद्रः॑ ॥६

तुभ्य॑ । इत् । ए॒ते । म॒रुतः॑ । सु॒ऽशेवाः॑ । अर्च॑न्ति । अ॒र्कम् । सु॒न्वन्ति॑ । अन्धः॑ ।

अहि॑म् । ओ॒हा॒नम् । अ॒पः । आ॒ऽशया॑नम् । प्र । मा॒याभिः॑ । मा॒यिन॑म् । स॒क्ष॒त् । इन्द्रः॑ ॥६

तुभ्य । इत् । एते । मरुतः । सुऽशेवाः । अर्चन्ति । अर्कम् । सुन्वन्ति । अन्धः ।

अहिम् । ओहानम् । अपः । आऽशयानम् । प्र । मायाभिः । मायिनम् । सक्षत् । इन्द्रः ॥६

“एते “मरुतः । महद्रवन्ति वदन्तीति' मरुतः स्तोतारः। "सुशेवाः । शेवमिति सुखनामैतत् । शोभनसुखाः सन्तः । स्तोत्रेण शोभनं सुखमुत्पादयन्त इत्यर्थः । हे इन्द्र “तुभ्येत् तुभ्यमेव “अर्कम् अर्चनीयं स्तोत्रम् "अर्चन्ति स्तुवन्ति कुर्वन्तीत्यर्थः । “अन्धः

सोमलक्षणमन्नं 'सुन्वन्ति अभिषवं कुर्वन्ति । “इन्द्रः परमैश्वर्ययुक्तः 'मायाभिः स्वकीयाभिः शक्तिभिः "अहिं वृत्रं “प्र “सक्षत् अभ्यभवत् । कीदृशम् । “ओहानं देवान् बाधमानम् "अपः उदकानि “आशयानम् आवृत्य शयनं कुर्वन्तं “मायिनं कपटवन्तमिति ॥

वि षू मृधो॑ ज॒नुषा॒ दान॒मिन्व॒न्नह॒न्गवा॑ मघवन्त्संचका॒नः ।

अत्रा॑ दा॒सस्य॒ नमु॑चे॒ः शिरो॒ यदव॑र्तयो॒ मन॑वे गा॒तुमि॒च्छन् ॥७

वि । सु । मृधः॑ । ज॒नुषा॑ । दान॑म् । इन्व॑न् । अह॑न् । गवा॑ । म॒घ॒ऽव॒न् । स॒म्ऽच॒का॒नः ।

अत्र॑ । दा॒सस्य॑ । नमु॑चेः । शिरः॑ । यत् । अव॑र्तयः । मन॑वे । गा॒तुम् । इ॒च्छन् ॥७

वि । सु । मृधः । जनुषा । दानम् । इन्वन् । अहन् । गवा । मघऽवन् । सम्ऽचकानः ।

अत्र । दासस्य । नमुचेः । शिरः । यत् । अवर्तयः । मनवे । गातुम् । इच्छन् ॥७

हे "मघवन् धनवन्निन्द्र “संचकानः अस्माभिः स्तूयमानस्त्वम् ॥ संपूर्वः कायतिः शब्दकर्मा । तस्य लडर्थे लिटि रूपम् ॥ "दानं देवानां बाधकं वृत्रमसुरं “गवा वज्रेण “इन्वन् प्रेरयन् हिंसन् “जनुषा जन्मना “मृधः तदनुचरान् राक्षसादीन् शत्रून् “सु सुष्ठु “वि “अहन् विजघन्थ । इन्द्रस्यासुरा जन्मारभ्य शत्रव इत्यर्थः । हे इन्द्र त्वम् “अत्र अस्मिन् युद्धे “मनवे नमुचिनापहृतगोधनाय मह्यं “गातुं सुखम् “इच्छन् अभिलषन् “नमुचेः एतन्नामकस्य “दासस्य उपक्षपयितुरसुरस्य संबन्धि “शिरः शीर्षं “यत् यदा “अवर्तयः अचूर्णयः तदा शत्रून् विजघन्थेति पूर्वेण संबन्धः ॥

यु॒जं हि मामकृ॑था॒ आदिदि॑न्द्र॒ शिरो॑ दा॒सस्य॒ नमु॑चेर्मथा॒यन् ।

अश्मा॑नं चित्स्व॒र्यं१॒ वर्त॑मान॒ं प्र च॒क्रिये॑व॒ रोद॑सी म॒रुद्भ्यः॑ ॥८

यु॒ज॑म् । हि । माम् । अकृ॑थाः । आत् । इत् । इ॒न्द्र॒ । शिरः॑ । दा॒सस्य॑ । नमु॑चेः । म॒था॒यन् ।

अश्मा॑नम् । चि॒त् । स्व॒र्य॑म् । वर्त॑मानम् । प्र । च॒क्रिया॑ऽइव । रोद॑सी॒ इति॑ । म॒रुत्ऽभ्यः॑ ॥८

युजम् । हि । माम् । अकृथाः । आत् । इत् । इन्द्र । शिरः । दासस्य । नमुचेः । मथायन् ।

अश्मानम् । चित् । स्वर्यम् । वर्तमानम् । प्र । चक्रियाऽइव । रोदसी इति । मरुत्ऽभ्यः ॥८

हे “इन्द्र त्वं “स्वर्यं स्वरेण सहितं “वर्तमानं भ्रमन्तम् “अश्मानं “चित् मेघमिव स्थितं “दासस्य उपक्षपयितुः “नमुचेः असुरस्य “शिरः “मथायन् चूर्णयन् “आदित् अनन्तरमेव “मां "युजं सखायम् “अकृथाः “हि चकृषे खलु । तदानीं “मरुद्भ्यः त्वत्सहायेभ्यः “रोदसी द्यावापृथिव्यौ “चक्रियेव चक्रे इव “प्र आस्ताम् ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

स्त्रियो॒ हि दा॒स आयु॑धानि च॒क्रे किं मा॑ करन्नब॒ला अ॑स्य॒ सेनाः॑ ।

अं॒तर्ह्यख्य॑दु॒भे अ॑स्य॒ धेने॒ अथोप॒ प्रैद्यु॒धये॒ दस्यु॒मिंद्रः॑ ॥९

स्त्रियः॑ । हि । दा॒सः । आयु॑धानि । च॒क्रे । किम् । मा॒ । क॒र॒न् । अ॒ब॒लाः । अ॒स्य॒ । सेनाः॑ ।

अ॒न्तः । हि । अख्य॑त् । उ॒भे इति॑ । अ॒स्य॒ । धेने॒ इति॑ । अथ॑ । उप॑ । प्र । ऐ॒त् । यु॒धये॑ । दस्यु॑म् । इन्द्रः॑ ॥९

स्त्रियः । हि । दासः । आयुधानि । चक्रे । किम् । मा । करन् । अबलाः । अस्य । सेनाः ।

अन्तः । हि । अख्यत् । उभे इति । अस्य । धेने इति । अथ । उप । प्र । ऐत् । युधये । दस्युम् । इन्द्रः ॥९

"दासः उपक्षपयिता नमुचिरसुरः "स्त्रियः स्त्रीः "आयुधानि युद्धसाधनानि "चक्रे "हि कृतवान् खलु । इन्द्रेण सह योद्धुं प्रहितवानित्यर्थः । "अस्य असुरस्य संबन्धिन्यः "अबलाः स्त्रीरूपाः "सेनाः "मा मां "किं "करन् । किं कुर्युरिति मन्यमान इन्द्रस्तासां मध्ये "अस्य असुरस्य "धेने प्रीणयित्र्यौ सुरूपे "उभे द्वे स्त्रियौ "अन्तः "अख्यत् "हि गृहमध्ये निदधे खलु । "अथ अनन्तरम् "इन्द्रः "दस्युं नमुचिं "युधये युद्धाय "उप "प्रैत् उपप्रागच्छत् ॥

समत्र॒ गावो॒ऽभितो॑ऽनवं॒ते॒हेह॑ व॒त्सैर्वियु॑ता॒ यदास॑न् ।

सं ता इंद्रो॑ असृजदस्य शा॒कैर्यदीं॒ सोमा॑सः॒ सुषु॑ता॒ अमं॑दन् ॥१०

सम् । अत्र॑ । गावः॑ । अ॒भितः॑ । अ॒न॒व॒न्त॒ । इ॒हऽइ॑ह । व॒त्सैः । विऽयु॑ताः । यत् । आस॑न् ।

सम् । ताः । इन्द्रः॑ । अ॒सृ॒ज॒त् । अ॒स्य॒ । शा॒कैः । यत् । ई॒म् । सोमा॑सः । सुऽसु॑ताः । अमं॑न्दन् ॥१०

सम् । अत्र । गावः । अभितः । अनवन्त । इहऽइह । वत्सैः । विऽयुताः । यत् । आसन् ।

सम् । ताः । इन्द्रः । असृजत् । अस्य । शाकैः । यत् । ईम् । सोमासः । सुऽसुताः । अमन्दन् ॥१०

"यत् यदा "गावः "वत्सैर्वियुताः "आसन् वियुक्ता अभवन् "अत्र अस्मिन् काले "अभितः सर्वतो नमुचिनापहृता गावः "इहेह इह चेह च सर्वतः "सम् "अनवन्त अत्यन्तमगच्छन् । "यत् यदा "सुषुताः बभ्रुनाम्ना ऋषिणा सुष्ट्वभिषुताः "सोमासः सोमाः "ईम् एनमिन्द्रम् "अमन्दन् अमादयन् तदा "इन्द्रः "शाकैः शक्तैर्मरुद्भिः सह "अस्य बभ्रोः संबन्धिनीर्नमुचिनापहृताः "ताः गाः "सम् "असृजत् वत्सैः सह समयोजयत् ॥ ॥ २७ ॥

यदीं॒ सोमा॑ ब॒भ्रुधू॑ता॒ अमं॑द॒न्नरो॑रवीद्वृष॒भः साद॑नेषु ।

पु॒रं॒द॒रः प॑पि॒वाँ इंद्रो॑ अस्य॒ पुन॒र्गवा॑मददादु॒स्रिया॑णां ॥११

यत् । ई॒म् । सोमाः॑ । ब॒भ्रुऽधू॑ताः । अम॑न्दन् । अरो॑रवीत् । वृ॒ष॒भः । सद॑नेषु ।

पु॒रम्ऽद॒रः । प॒पि॒ऽवान् । इन्द्रः॑ । अ॒स्य॒ । पुनः॑ । गवा॑म् । अ॒द॒दा॒त् । उ॒स्रिया॑णाम् ॥११

यत् । ईम् । सोमाः । बभ्रुऽधूताः । अमन्दन् । अरोरवीत् । वृषभः । सदनेषु ।

पुरम्ऽदरः । पपिऽवान् । इन्द्रः । अस्य । पुनः । गवाम् । अददात् । उस्रियाणाम् ॥११

“यत् यदा “बभ्रुधूताः बभ्रुणाभिषुताः “सोमाः “ईम् एनमिन्द्रम् “अमन्दन् अमादयन् तदा “वृषभः कामानां वर्षिता इन्द्रः “सदनेषु युद्धेषु “अरोरवीत् अत्यर्थं शब्दमकरोत् । “पुरंदरः पुरां दारयिता “अस्य इमं सोमं “पपिवान् पीतवान् “इन्द्रः “पुनः “उस्रियाणां क्षीरमुत्स्राविणीः “गवां गाः “अददात् बभ्रवे ददौ ॥

भ॒द्रमि॒दं रु॒शमा॑ अग्ने अक्र॒न्गवां॑ च॒त्वारि॒ दद॑तः स॒हस्रा॑ ।

ऋ॒णं॒च॒यस्य॒ प्रय॑ता म॒घानि॒ प्रत्य॑ग्रभीष्म॒ नृत॑मस्य नृ॒णां ॥१२

भ॒द्रम् । इ॒दम् । रु॒शमाः॑ । अ॒ग्ने॒ । अ॒क्र॒न् । गवा॑म् । च॒त्वारि॑ । दद॑तः । स॒हस्रा॑ ।

ऋ॒ण॒म्ऽच॒यस्य॑ । प्रऽय॑ता । म॒घानि॑ । प्रति॑ । अ॒ग्र॒भी॒ष्म॒ । नृऽत॑मस्य । नृ॒णाम् ॥१२

भद्रम् । इदम् । रुशमाः । अग्ने । अक्रन् । गवाम् । चत्वारि । ददतः । सहस्रा ।

ऋणम्ऽचयस्य । प्रऽयता । मघानि । प्रति । अग्रभीष्म । नृऽतमस्य । नृणाम् ॥१२

रुशम इति कश्चिज्जनपदविशेषः । अत्र रुशमशब्देन तत्रत्या जना उच्यन्ते । “रुशमाः ऋणंचयनाम्नो राज्ञः किंकराः हे “अग्ने 'भद्रं कल्याणम् “इदं कर्म “अक्रन् अकुर्वन् । कीदृशाः । “गवां धेनूनां “चत्वारि चतुःसंख्यायुक्तानि "सहस्रा सहस्राणि “ददतः मह्यं प्रयच्छन्तः । राज्ञा हि दीयमानानि धनानि राजपुरुषा एव प्रयच्छन्तीत्यर्थः । “नृणां नेतॄणां मध्ये "नृतमस्य अतिशयेन नेतृतमस्य “ऋणंच यस्य एतन्नामकेन राज्ञा “प्रयता प्रयतानि दत्तानि “मघानि गोरूपाणि धनानि वयं “प्रत्यग्रभीष्म प्रतिगृहीतवन्तः स्मः । पूजार्थं बहुवचनम् ॥

सु॒पेश॑सं॒ माव॑ सृज॒ंत्यस्तं॒ गवां॑ स॒हस्रै॑ रु॒शमा॑सो अग्ने ।

ती॒व्रा इंद्र॑मममंदुः सु॒तासो॒ऽक्तोर्व्यु॑ष्टौ॒ परि॑तक्म्यायाः ॥१३

सु॒ऽपेश॑सम् । मा॒ । अव॑ । सृ॒ज॒न्ति॒ । अस्त॑म् । गवा॑म् । स॒हस्रैः॑ । रु॒शमा॑सः । अ॒ग्ने॒ ।

ती॒व्राः । इन्द्र॑म् । अ॒म॒म॒न्दुः॒ । सु॒तासः॑ । अ॒क्तोः । विऽउ॑ष्टौ । परि॑ऽतक्म्यायाः ॥१३

सुऽपेशसम् । मा । अव । सृजन्ति । अस्तम् । गवाम् । सहस्रैः । रुशमासः । अग्ने ।

तीव्राः । इन्द्रम् । अममन्दुः । सुतासः । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाः ॥१३

हे "अग्ने “रुशमासः रुशमा ऋणंचयस्य किंकराः “सुपेशसं सुरूपमलंकाराच्छादनादिभिः संस्कृतं “मा माम् “अस्तं गृहं “गवां धेनूनां “सहस्रैः सह "अव "सृजन्ति प्रापयन्ति स्म । तदनन्तरमेव “तीव्राः रसवन्तः “सुतासः लब्धबहुधनेन मयाभिषुताः सोमाः “परितक्म्यायाः । तमसा भूतानि परितस्तकति गच्छतीति परितक्म्या । तस्याः "अक्तोः रात्रेः “व्युष्टौ व्युच्छने सति । उषःकाले इत्यर्थः । “इन्द्रम् "अममन्दुः अमादयन् । बभ्रुः गवां प्राप्त्यनन्तरमविलम्बितमेव सोमेनेजे इत्यर्थः ॥

औच्छ॒त्सा रात्री॒ परि॑तक्म्या॒ याँ ऋ॑णंच॒ये राज॑नि रु॒शमा॑नां ।

अत्यो॒ न वा॒जी र॒घुर॒ज्यमा॑नो ब॒भ्रुश्च॒त्वार्य॑सनत्स॒हस्रा॑ ॥१४

औच्छ॑त् । सा । रात्री॑ । परि॑ऽतक्म्या । या । ऋ॒ण॒म्ऽच॒ये । राज॑नि । रु॒शमा॑नाम् ।

अत्यः॑ । न । वा॒जी । र॒घुः । अ॒ज्यमा॑नः । ब॒भ्रुः । च॒त्वारि॑ । अ॒स॒न॒त् । स॒हस्रा॑ ॥१४

औच्छत् । सा । रात्री । परिऽतक्म्या । या । ऋणम्ऽचये । राजनि । रुशमानाम् ।

अत्यः । न । वाजी । रघुः । अज्यमानः । बभ्रुः । चत्वारि । असनत् । सहस्रा ॥१४

“रुशमानं रुशमनाम्नां जनानां “राजनि प्रभौ “ऋणंचये एतत्संज्ञके तत्समीप एव “या रात्रिः “परितक्या परितो गन्त्री भवति “सा “रात्री “औच्छत् व्युष्टाभवत् । “अत्यः सततगामी “वाजी “न अश्व इव “रघुः शीघ्रगामी "अज्यमानः प्रेर्यमाणः “बभ्रुः एतन्नामक ऋषिः “चत्वारि चतुःसंख्याकानि "सहस्रा सहस्राणि गोरूपाणि धनानि “असनत् अलभत ॥

चतुः॑सहस्रं॒ गव्य॑स्य प॒श्वः प्रत्य॑ग्रभीष्म रु॒शमे॑ष्वग्ने ।

घ॒र्मश्चि॑त्त॒प्तः प्र॒वृजे॒ य आसी॑दय॒स्मय॒स्तम्वादा॑म॒ विप्राः॑ ॥१५

चतुः॑ऽसहस्रम् । गव्य॑स्य । प॒श्वः । प्रति॑ । अ॒ग्र॒भी॒ष्म॒ । रु॒शमे॑षु । अ॒ग्ने॒ ।

घ॒र्मः । चि॒त् । त॒प्तः । प्र॒ऽवृजे॑ । यः । आसी॑त् । अ॒य॒स्मयः॑ । तम् । ऊं॒ इति॑ । आदा॑म । विप्राः॑ ॥१५

चतुःऽसहस्रम् । गव्यस्य । पश्वः । प्रति । अग्रभीष्म । रुशमेषु । अग्ने ।

घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् । अयस्मयः । तम् । ऊं इति । आदाम । विप्राः ॥१५

हे अग्ने वयं “रुशमेषु एतत्संज्ञकेषु जनेषु “गव्यस्य गवात्मकस्य “पश्वः पशोः पशूनाम् । जातावेकवचनम् । “चतुःसहस्रं चत्वारि सहस्राणि प्रत्यग्रभीष्म प्रतिगृहीतवन्तः स्मः । “प्रवृजे प्रवृञ्जनार्थं “तप्तः संतप्तः शोभनवर्णः “घर्मश्चित् महावीर इव "अयस्मयः अयोमयो हिरण्मयः “यः कलशः “आसीत् अभवत् 'तमु दोहनार्थं कलशं च “विप्राः मेधाविनो वयं रुशमेषु “आदाम आदत्तवन्तः ॥ ॥ २८ ॥

# ऋग्वेदः सूक्तं ५.३१



दे. इन्द्रः, ८ तृतीयपादस्य कुत्सो वा, चतुर्थपादस्य उशना वा, ९ इन्द्राकुत्सौ। त्रिष्टुप्।

---

इन्द्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा वाजयन्तम् ।

यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्रथमः सिषासन् ॥१॥

आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व ।

नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनाँश्चिज्जनिवतश्चकर्थ ॥२॥

उद्यत्सहः सहस आजनिष्ट देदिष्ट इन्द्र इन्द्रियाणि विश्वा ।

प्राचोदयत्सुदुघा वव्रे अन्तर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥३॥

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥४॥

वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।

अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥५॥

प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन्या चकर्थ ।

शक्तीवो यद्विभरा रोदसी उभे जयन्नपो मनवे दानुचित्राः ॥६॥

तदिन्नु ते करणं दस्म विप्राहिं यद्घ्नन्नोजो अत्रामिमीथाः ।

शुष्णस्य चित्परि माया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥७॥

त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार इन्द्र ।

उग्रमयातमवहो ह कुत्सं सं ह यद्वामुशनारन्त देवाः ॥८॥

इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।

निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ॥९॥

वातस्य युक्तान्सुयुजश्चिदश्वान्कविश्चिदेषो अजगन्नवस्युः ।

विश्वे ते अत्र मरुतः सखाय इन्द्र ब्रह्माणि तविषीमवर्धन् ॥१०॥

सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम् ।

भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥११॥

आयं जना अभिचक्षे जगामेन्द्रः सखायं सुतसोममिच्छन् ।

वदन्ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरन्ति ॥१२॥

ये चाकनन्त चाकनन्त नू ते मर्ता अमृत मो ते अंह आरन् ।

वावन्धि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥१३॥

**सायणभाष्यम्**

‘ इन्द्रो रथाय' इति त्रयोदशर्चं सप्तदशं सूक्तम् । अवस्युर्नाम आत्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । ' उग्रमयातं ' ' सं ह यद्वाम्' इति पादयोः क्रमेण कुत्सोशनसौ विकल्पेन देवता । ‘ इन्द्राकुत्सा वहमाना' इत्यस्य इन्द्रः कुत्सश्च । तथा चानुक्रान्तम् - ‘इन्द्रो रथाय सप्तोनावस्युरुप्रमिति कौत्स्यौशनसौ वा पादौ परैन्द्राकौत्सी ' इति । विनियोगो लैङ्गिकः ॥

इंद्रो॒ रथा॑य प्र॒वतं॑ कृणोति॒ यम॒ध्यस्था॑न्म॒घवा॑ वाज॒यंतं॑ ।

यू॒थेव॑ प॒श्वो व्यु॑नोति गो॒पा अरि॑ष्टो याति प्रथ॒मः सिषा॑सन् ॥१

इन्द्रः॑ । रथा॑य । प्र॒ऽवत॑म् । कृ॒णो॒ति॒ । यम् । अ॒धि॒ऽअस्था॑त् । म॒घऽवा॑ । वा॒ज॒ऽयन्त॑म् ।

यू॒थाऽइ॑व । प॒श्वः । वि । उ॒नो॒ति॒ । गो॒पाः । अरि॑ष्टः । या॒ति॒ । प्र॒थ॒मः । सिसा॑सन् ॥१

इन्द्रः । रथाय । प्रऽवतम् । कृणोति । यम् । अधिऽअस्थात् । मघऽवा । वाजऽयन्तम् ।

यूथाऽइव । पश्वः । वि । उनोति । गोपाः । अरिष्टः । याति । प्रथमः । सिसासन् ॥१

“मघवा धनवान् “इन्द्रः “वाजयन्तम् अन्नमिच्छन्तं "यं रथम् अध्यस्थात् अधितिष्ठति तस्मै “रथाय “प्रवतं प्रवणमाजिं “कृणोति करोति । अपि च “गोपाः गोपालः “पश्वः “यूथेव पशोः पशूनां यूथानि यथा “व्युनोति प्रेरयति तथा शत्रुसैन्यानि प्रेरयति । “अरिष्टः शत्रुभिः स्वयमहिंसितः “प्रथमः देवानां मुख्य इन्द्रः “सिषासन् शत्रुधनानीच्छन् "याति गच्छति ।।

आ प्र द्र॑व हरिवो॒ मा वि वे॑नः॒ पिशं॑गराते अ॒भि नः॑ सचस्व ।

न॒हि त्वदिं॑द्र॒ वस्यो॑ अ॒न्यदस्त्य॑मे॒नांश्चि॒ज्जनि॑वतश्चकर्थ ॥२

आ । प्र । द्र॒व॒ । ह॒रि॒ऽवः॒ । मा । वि । वे॒नः॒ । पिश॑ङ्गऽराते । अ॒भि । नः॒ । स॒च॒स्व॒ ।

न॒हि । त्वत् । इ॒न्द्र॒ । वस्यः॑ । अ॒न्यत् । अस्ति॑ । अ॒मे॒नान् । चि॒त् । जनि॑ऽवतः । च॒क॒र्थ॒ ॥२

आ । प्र । द्रव । हरिऽवः । मा । वि । वेनः । पिशङ्गऽराते । अभि । नः । सचस्व ।

नहि । त्वत् । इन्द्र । वस्यः । अन्यत् । अस्ति । अमेनान् । चित् । जनिऽवतः । चकर्थ ॥२

हे "हरिवः हरिवन्निन्द्र त्वम् “आ अस्मानभिमुखं “प्र “द्रव प्रकर्षेण गच्छ। किंतु “मा “वि “वेनः । वेनतिः कान्तिकर्मा । अस्मासु विगतकामो मा भूः । किंच हे "पिशङ्गराते बहुरूपधनेन्द्र “नः अस्मान् “अभि “सचस्व अभिसेवस्व । अपि च हे “इन्द्र “वस्यः वसीयः श्रेयस्करं “त्वत् त्वत्तः “अन्यत् “नहि “अस्ति अन्यद्वस्तुजातं नास्ति । “अमेनांश्चित् । मेनाशब्दः स्त्रीवाची । अपगतस्त्रीकांश्चित् “जनिवतः जायावतः “चकर्थ करोषि ॥

उद्यत्सहः॒ सह॑स॒ आज॑निष्ट देदि॑ष्ट॒ इंद्रं॑ इंद्रि॒याणि॒ विश्वा॑ ।

प्राचोदयत्सुदुघा वव्रे अंतर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥३

उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः । इन्द्रियाणि । विश्वा ।

प्र । अचोदयत् । सुऽदुघाः । वव्रे । अन्तः । वि । ज्योतिषा । सम्ऽववृत्वत् । तमः । अवरित्यवः ॥३

उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः । इन्द्रियाणि । विश्वा ।

प्र । अचोदयत् । सुऽदुघाः । वव्रे । अन्तः । वि । ज्योतिषा । सम्ऽववृत्वत् । तमः । अवरित्यवः ॥३

“यत् यदा “सहः सूर्यसंबन्धि तेजः “सहसः उषःसंबन्धिनस्तेजसः “उत् “आजनिष्ट उपरिष्टात् प्रादुर्बभूव तदा “इन्द्रः “विश्वा विश्वानि सर्वाणि इन्द्रियाणि धनानि । इन्द्रियमिति धननामैतत । “देदिष्टे । यजमानेभ्यो दिशति । “वव्रे निवारके पर्वते “अन्तः मध्ये बलेन निरुद्धाः "सुदुघाः सुष्ठु दोग्ध्रीर्गाः “प्राचोदयत् प्रैरयत् । “ज्योतिषा तेजसा “संववृत्वत् संवरणशीलं “तमः “वि “अवः निवारितवान् ।।

अनवस्ते रथमश्वाय तक्षंत्वष्टा वज्रं पुरुहूत द्युमंतं ।

ब्रह्माण इंद्रं महयंतो अर्कैरवर्धयन्नहये हंतवा उं ॥४

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् ।

ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊं इति ॥४

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् ।

ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊं इति ॥४

हे “पुरुहूत बहुभिः आहूतेन्द्र “ते त्वदीयं “रथम् “अश्वाय अश्वाभ्यां संयोगार्हम् "अनवः । अनवो मनुष्याः । ऋभवः “तक्षन् अतक्षन् अकुर्वन् । “त्वष्टा च त्वदीयं “वज्रं “द्युमन्तं दीप्तिमन्तम् अकरोत् । “उ अपि च “महयन्तः “इन्द्रं पूजयन्तः “ब्रह्माणः अङ्गिरसः परिवृढा मरुतो वा “अहये अहिं वृत्रं “हन्तवै हन्तुम् “अर्कैः स्तोत्रैः “अवर्धयन् वर्धितवन्तः ॥

वृष्णे यत्ते वृषणो अर्कमर्चानिंद्र ग्रावाणो अदितिः सजोषाः ।

अनश्वासो ये पवयोऽरथा इंद्रेषिता अभ्यवर्तंत दस्यून् ॥५

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सऽजोषाः ।

अनश्वासः । ये । पवयः । अरथाः । इन्द्रऽइषिताः । अभि । अवर्तन्त । दस्यून् ॥५

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सऽजोषाः ।

अनश्वासः । ये । पवयः । अरथाः । इन्द्रऽइषिताः । अभि । अवर्तन्त । दस्यून् ॥५

हे “इन्द्र “यत् यदा “वृषणः सेचनसमर्था मरुतः “वृष्णे कामानां वर्षित्रे “ते तुभ्यम् "अर्कं स्तोत्रम् “अर्चान् अस्तुवन् अकुर्वन्नित्यर्थः । तदा "अदितिः अदीनाः ॥ वचनव्यत्ययः ॥ “ग्रावाणः अभिषवपाषाणाः “सजोषाः संगता बभूवुरिति शेषः । “अनश्वासः अश्ववर्जिताः “अरथाः रथहीनाः “इन्द्रेषिताः इन्द्रेण प्रेषिताः "पवयः पवमाना गच्छन्तः “ये मरुतः “दस्यून् शत्रून् “अभ्यवर्तन्त अभिभूतान् कुर्वन्तो वर्तन्ते स्म ते मरुतोऽर्चानिति संबन्धः ॥ ॥ २९ ॥

प्र ते॒ पूर्वा॑णि॒ कर॑णानि वोचं॒ प्र नूत॑ना मघव॒न्या च॒कर्थ॑ ।

शक्ती॑वो॒ यद्वि॒भरा॒ रोद॑सी उ॒भे जय॑न्न॒पो मन॑वे॒ दानु॑चित्राः ॥६

प्र । ते॒ । पूर्वा॑णि । कर॑णानि । वो॒च॒म् । प्र । नूत॑ना । म॒घ॒ऽव॒न् । या । च॒कर्थ॑ ।

शक्ति॑ऽवः । यत् । वि॒ऽभराः॑ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । जय॑न् । अ॒पः । मन॑वे । दानु॑ऽचित्राः ॥६

प्र । ते । पूर्वाणि । करणानि । वोचम् । प्र । नूतना । मघऽवन् । या । चकर्थ ।

शक्तिऽवः । यत् । विऽभराः । रोदसी इति । उभे इति । जयन् । अपः । मनवे । दानुऽचित्राः ॥६

हे इन्द्र "ते त्वदीयानि “पूर्वाणि पुरातनानि "करणानि कर्माणि “प्र “वोचम् अहं प्रकर्षेण ब्रवीमि । “नूतना नूतनानि नवानि कर्माणि “प्र वोचं प्रब्रवीमि । हे “मघवन् धनवन्निन्द्र “या यानि कर्माणि “चकर्थ कृतवानसि तानि प्र वोचमिति संबन्धः । हे “शक्तीवः शक्तिमन् । शक्तिर्वज्रं कर्म वा । तद्वन्निन्द्र “यत् यस्त्वम् “उभे “रोदसी द्यावापृथिव्यौ “जयन् वशीकुर्वन् “अपः उदकानि “मनवे मनुष्याय “विभराः विविच्य बिभर्षि । कीदृशीः । “दानुचित्राः चित्रदानाः ॥

तदिन्नु ते॒ कर॑णं दस्म वि॒प्राहिं॒ यद्घ्नन्नोजो॒ अत्रामि॑मीथाः ।

शुष्ण॑स्य चि॒त्परि॑ मा॒या अ॑गृभ्णाः प्रपि॒त्वं यन्नप॒ दस्यूँ॑रसेधः ॥७

तत् । इत् । नु । ते॒ । कर॑णम् । द॒स्म॒ । वि॒प्र॒ । अहि॑म् । यत् । घ्नन् । ओजः॑ । अत्र॑ । अमि॑मीथाः ।

शुष्ण॑स्य । चि॒त् । परि॑ । मा॒याः । अ॒गृ॒भ्णाः॒ । प्र॒ऽपि॒त्वम् । यन् । अप॑ । दस्यू॑न् । अ॒से॒धः॒ ॥७

तत् । इत् । नु । ते । करणम् । दस्म । विप्र । अहिम् । यत् । घ्नन् । ओजः । अत्र । अमिमीथाः ।

शुष्णस्य । चित् । परि । मायाः । अगृभ्णाः । प्रऽपित्वम् । यन् । अप । दस्यून् । असेधः ॥७

हे “दस्म दर्शनीय “विप्र मेधाविन्निन्द्र त्वम् “अत्र अस्मिँल्लोके “अहिं वृत्रमसुरं “घ्नन् हिंसन् “यत् “ओजः यद्बलम् "अमिमीथाः प्रकाशितवानसि “तदिन्नु तत्खलु “ते त्वदीयं "करणं कर्म विद्यते । अपि च “शुष्णस्य “चित् एतन्नामकस्याप्यसुरस्य संबन्धिनीः "मायाः प्रज्ञाः “परि “अगृभ्णाः परिगृहीतवानसि । हे इन्द्र त्वं “प्रपित्वं संग्रामं समीपं वा “यन् प्राप्नुवन् "दस्यून् असुरान् “अप “असेधः अपाबाधथाः ॥

त्वम॒पो यद॑वे तु॒र्वशा॒यार॑मयः सु॒दुघाः॑ पा॒र इं॑द्र ।

उ॒ग्रम॑यात॒मव॑हो ह॒ कुत्सं॒ सं ह॒ यद्वा॑मु॒शनार॑त दे॒वाः ॥८

त्वम् । अ॒पः । यद॑वे । तु॒र्वशा॒य । अर॑मयः । सु॒ऽदुघाः॑ । पा॒रः । इ॒न्द्र॒ ।

उ॒ग्रम् । अ॒या॒त॒म् । अव॑हः । ह॒ । कुत्स॑म् । सम् । ह॒ । यत् । वा॒म् । उ॒शना॑ । अर॑न्त । दे॒वाः ॥८

त्वम् । अपः । यदवे । तुर्वशाय । अरमयः । सुऽदुघाः । पारः । इन्द्र ।

उग्रम् । अयातम् । अवहः । ह । कुत्सम् । सम् । ह । यत् । वाम् । उशना । अरन्त । देवाः ॥८

हे “इन्द्र “त्वं पारे नदीनां तीरे । प्रवृद्धाः। इति शेषः। 'सुदुघाः ओषधिवनस्पतीन् सुष्ठु दुहतीः "अपः उदकानि “यदवे यदुनामकाय राज्ञे “तुर्वशाय एतन्नामकाय राज्ञे च "अरमयः रमितवानसि । हे इन्द्र युवाम् । त्वं कुत्सश्चेति शेषः । "उग्रम् उद्गूर्णं शुष्णम् "अयातम् अगच्छतम् । तदनन्तरं त्वं शुष्णं हत्वा “कुत्सम् "अवहो “ह स्वगृहं प्रापितवानसि खलु । “यत् यदा “वां युवामिन्द्राकुत्सौ "उशना भार्गवः "देवाः च "सम् "अरन्त “ह संभेजिरे खलु ॥

इंद्रा॑कुत्सा॒ वह॑माना॒ रथे॒ना वा॒मत्या॒ अपि॒ कर्णे॑ वहंतु ।

निः षीं॑म॒द्भ्यो धम॑थो॒ निः ष॒धस्था॑न्म॒घोनो॑ हृ॒दो व॑रथ॒स्तमां॑सि ॥९

इन्द्रा॑कुत्सा । वह॑माना । रथे॑न । आ । वा॒म् । अत्याः॑ । अपि॑ । कर्णे॑ । व॒ह॒न्तु॒ ।

निः । सी॒म् । अ॒त्ऽभ्यः । धम॑थः । निः । स॒धऽस्था॑त् । म॒घोनः॑ । हृ॒दः । व॒र॒थ॒ः । तमां॑सि ॥९

इन्द्राकुत्सा । वहमाना । रथेन । आ । वाम् । अत्याः । अपि । कर्णे । वहन्तु ।

निः । सीम् । अत्ऽभ्यः । धमथः । निः । सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥९

हे 'इन्द्राकुत्सा इन्द्राकुत्सौ “रथेन “वहमाना वहमानौ उह्यमानौ “वां युवाम् “अत्याः अश्वाः “कर्णे “अपि । स्तोत्राणि कृणोति करोतीति कर्णः स्तोता यजमानो वा । तत्समीपेऽपीति यावत् । “आ “वहन्तु आ समन्तात् वाहका भवन्तु । युवामपि “अद्भ्यः अप्सु प्रविष्टं “सीम् एनं शुष्णासुरं “निः “धमथः अबाधेथाम् । सीमिति शुष्णासुरो बुद्धिस्थः परामृश्यते । “सधस्थात् स्वकीयात् स्थानात् “निः अबाधेथाम् । “मघोनः मघवतो हविष्मतो यजमानस्य “हृदः हृदयात् “तमांसि अज्ञानरूपाणि पापानि “वरथः निवारयथः ॥

वातस्य युक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषो अजगन्नवस्युः ।

विश्वे ते अत्र मरुतः सखाय इंद्र ब्रह्माणि तविषीमवर्धन् ॥१०

वातस्य । युक्तान् । सुऽयुजः । चित् । अश्वान् । कविः । चित् । एषः । अजगन् । अवस्युः ।

विश्वे । ते । अत्र । मरुतः । सखायः । इन्द्र । ब्रह्माणि । तविषीम् । अवर्धन् ॥१०

वातस्य । युक्तान् । सुऽयुजः । चित् । अश्वान् । कविः । चित् । एषः । अजगन् । अवस्युः ।

विश्वे । ते । अत्र । मरुतः । सखायः । इन्द्र । ब्रह्माणि । तविषीम् । अवर्धन् ॥१०

“कविश्चित् प्राज्ञोऽपि “अवस्युः एतन्नामकः “एषः मन्त्रद्रष्टा “वातस्य वायोर्वेगेन “युक्तान् संयुक्तान् “सुयुजश्चित् सुष्ठु योजनीयान् “अश्वान् “अजगन् प्राप्नोत् । अवस्योः “सखायः “विश्वे सर्वे “मरुतः बहवः स्तोतारो हे “इन्द्र “अत्र अस्मिँलोके “ते त्वदीयां “तविषीं बलं “ब्रह्माणि ब्रह्मभिः स्तोत्रैः “अवर्धन् अवर्धयन् ॥ ॥ ३० ॥

सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसं ।

भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥११

सूरः । चित् । रथम् । परिऽतक्म्यायाम् । पूर्वम् । करत् । उपरम् । जूजुऽवांसम् ।

भरत् । चक्रम् । एतशः । सम् । रिणाति । पुरः । दधत् । सनिष्यति । क्रतुम् । नः ॥११

सूरः । चित् । रथम् । परिऽतक्म्यायाम् । पूर्वम् । करत् । उपरम् । जूजुऽवांसम् ।

भरत् । चक्रम् । एतशः । सम् । रिणाति । पुरः । दधत् । सनिष्यति । क्रतुम् । नः ॥११

इन्द्रः “परितक्म्यायां संग्रामे । परितो गच्छन्त्यस्यां भटाः इति परितक्म्या संग्रामः। एतशाख्येन ऋषिणा सह योद्धुः "सूरश्चित् सूर्यस्यापि संबन्धिनं "जूजुवांसं वेगेन गच्छन्तं “रथम् “उपरम् उपरतव्यापारं “पूर्वं करत् पुराकरोत् । “एतशः एतशाय ॥

विभक्तिव्यत्ययः ॥ इन्द्रः पूर्वं द्विचक्रस्य रथस्यैकं “चक्रं "भरत् अहरत् । स इन्द्रस्तेन चक्रेणासुरान् “सं “रिणाति हिनस्ति । अपि च “पुरो दधत् अस्मान् पुरस्कुर्वन् “नः अस्मदीयं “क्रतुं यज्ञं "सनिष्यति संभजतु ॥

आयं जना अभिचक्षे जगामेंद्रः सखायं सुतसोममिच्छन् ।

वदन्ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरंति ॥१२

आ । अयम् । जनाः । अभिऽचक्षे । जगाम । इन्द्रः । सखायम् । सुतऽसोमम् । इच्छन् ।

वदन् । ग्रावा । अव । वेदिम् । भ्रियाते । यस्य । जीरम् । अध्वर्यवः । चरन्ति ॥१२

आ । अयम् । जनाः । अभिऽचक्षे । जगाम । इन्द्रः । सखायम् । सुतऽसोमम् । इच्छन् ।

वदन् । ग्रावा । अव । वेदिम् । भ्रियाते । यस्य । जीरम् । अध्वर्यवः । चरन्ति ॥१२

हे "जनाः "अभिचक्षे युष्मानभिद्रष्टुम् “अयम् इन्द्रः “सखायं स्तोतारं “सुतसोमम् अभिषुतसोमं यजमानम् "इच्छन् अभिलषन् “आ “जगाम आगच्छति । “अध्वर्यवः “यस्य ग्राव्णः “जीरं क्षेपणं प्रेरणं “चरन्ति कुर्वन्ति सः “ग्रावा सोमाभिषवपाषाणः “वदन् शब्दं कुर्वन “वेदिम् “अव “भ्रियाते अभिह्रियते ॥

ये चाकनंत चाकनंत नू ते मर्ता अमृत मो ते अंह आरन् ।

वावंधि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥१३

ये । चाकनन्त । चाकनन्त । नु । ते । मर्ताः । अमृत । मो इति । ते । अंहः । आ । अरन् ।

ववन्धि । यज्यून् । उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥१३

ये । चाकनन्त । चाकनन्त । नु । ते । मर्ताः । अमृत । मो इति । ते । अंहः । आ । अरन् ।

ववन्धि । यज्यून् । उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥१३

हे इन्द्र धनार्थिनः "ये जनास्त्वां “चाकनन्त अकामयन्त पुनश्च “ते “नु क्षिप्रमेव त्वां “चाकनन्त हे “अमृत अमरणशीलेन्द्र “मर्ताः मरणधर्माणः “ते जनाः “अंहः अनर्थं "मो “आरन् मा गमन् । मा उ इति निपातसमुदायो मेत्येकनिपातार्थे वर्तते । “उत अपि च “यज्यून् यजमानान् "ववन्धि संभजस्व । “येषु “जनेषु येषां जनानां मध्ये वयं स्तोतारः “ते त्वदीयाः “स्याम भवाम हे इन्द्र त्वं “तेषु जनेषु “ओजः बलं “धेहि ॥ ॥ ३१ ॥

**टिप्पणी**

५.३१.१ इन्द्रो रथाय प्रवतं इति इन्द्रो रथाय प्रवतं कृणोतीति मरुत्वतीयं प्रवत्प्रवद्वै प्रथमस्याह्नो रूपम् - कौ.ब्रा. २०.२

५.३१.४ अनवस्ते इति

श्लोकानुश्लोके (https://sa.wikisource.org/s/2f17)

इन्द्रायार्काश्वमेधवते पुरोडाशम् एकादशकपालं निर् वपेद् यम् महायज्ञो नोपनमेत् (तैसं. २.२.७.५ (https://sa.wikisource.org/s/1e22) ) इत्यस्य पुरोनुवाक्या - अनवस्ते इति।

अनु/अनः उपरि टिप्पणी (https://puranastudy.angelfire.com/pur_index2/anu.htm)

५.३१.९

प्रमादस्त्वेष हन्ताहं न स स्व इत्यपह्नवः । इन्द्राकुत्सेत्युपप्रैषो न विजानामि संज्वरः ।।बृहद्देवता १.५६ ।।

**मण्डल ५**

| | | | | |
|---|---|---|---|---|
| सूक्तं ५.१ | सूक्तं ५.२१ | सूक्तं ५.४१ | सूक्तं ५.६१ | |
| सूक्तं ५.२ | सूक्तं ५.२२ | सूक्तं ५.४२ | सूक्तं ५.६२ | |
| सूक्तं ५.३ | सूक्तं ५.२३ | सूक्तं ५.४३ | सूक्तं ५.६३ | |
| सूक्तं ५.४ | सूक्तं ५.२४ | सूक्तं ५.४४ | सूक्तं ५.६४ | |
| सूक्तं ५.५ | सूक्तं ५.२५ | सूक्तं ५.४५ | सूक्तं ५.६५ | |
| सूक्तं ५.६ | सूक्तं ५.२६ | सूक्तं ५.४६ | सूक्तं ५.६६ | |
| सूक्तं ५.७ | सूक्तं ५.२७ | सूक्तं ५.४७ | सूक्तं ५.६७ | |
| सूक्तं ५.८ | सूक्तं ५.२८ | सूक्तं ५.४८ | सूक्तं ५.६८ | सूक्तं ५.८१ |
| सूक्तं ५.९ | सूक्तं ५.२९ | सूक्तं ५.४९ | सूक्तं ५.६९ | सूक्तं ५.८२ |
| सूक्तं ५.१० | सूक्तं ५.३० | सूक्तं ५.५० | सूक्तं ५.७० | सूक्तं ५.८३ |
| सूक्तं ५.११ | सूक्तं ५.३१ | सूक्तं ५.५१ | सूक्तं ५.७१ | सूक्तं ५.८४ |
| सूक्तं ५.१२ | सूक्तं ५.३२ | सूक्तं ५.५२ | सूक्तं ५.७२ | सूक्तं ५.८५ |
| सूक्तं ५.१३ | सूक्तं ५.३३ | सूक्तं ५.५३ | सूक्तं ५.७३ | सूक्तं ५.८६ |
| सूक्तं ५.१४ | सूक्तं ५.३४ | सूक्तं ५.५४ | सूक्तं ५.७४ | सूक्तं ५.८७ |
| सूक्तं ५.१५ | सूक्तं ५.३५ | सूक्तं ५.५५ | सूक्तं ५.७५ | |
| सूक्तं ५.१६ | सूक्तं ५.३६ | सूक्तं ५.५६ | सूक्तं ५.७६ | |
| सूक्तं ५.१७ | सूक्तं ५.३७ | सूक्तं ५.५७ | सूक्तं ५.७७ | |
| सूक्तं ५.१८ | सूक्तं ५.३८ | सूक्तं ५.५८ | सूक्तं ५.७८ | |
| सूक्तं ५.१९ | सूक्तं ५.३९ | सूक्तं ५.५९ | सूक्तं ५.७९ | |
| सूक्तं ५.२० | सूक्तं ५.४० | सूक्तं ५.६० | सूक्तं ५.८० | |

# ऋग्वेदः सूक्तं ५.३२

ऋग्वेदः - मण्डल ५
← सूक्तं ५.३१ सूक्तं ५.३२ सूक्तं ५.३३ →
गातुरात्रेयः।

दे. इन्द्रः। त्रिष्टुप्।

---

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।

महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥१॥

त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन् ।

अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इन्द्र तविषीमधत्थाः ॥२॥

त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिन्द्रः ।

य एक इदप्रतिर्मन्यमान आदस्मादन्यो अजनिष्ट तव्यान् ॥३॥

त्यं चिदेषां स्वधया मदन्तं मिहो नपातं सुवृधं तमोगाम् ।

वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णम् ॥४॥

त्यं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म ।

यदीं सुक्षत्र प्रभृता मदस्य युयुत्सन्तं तमसि हर्म्ये धाः ॥५॥

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् ।

तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान ॥६॥

उद्यदिन्द्रो महते दानवाय वधर्यमिष्ट सहो अप्रतीतम् ।

यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जन्तोरधमं चकार ॥७॥

त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्यादुग्रः ।

अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचम् ॥८॥

को अस्य शुष्मं तविषीं वरात एको धना भरते अप्रतीतः ।

इमे चिदस्य ज्रयसो नु देवी इन्द्रस्यौजसो भियसा जिहाते ॥९॥

न्यस्मै देवी स्वधितिर्जिहीत इन्द्राय गातुरुशतीव येमे ।

सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमन्त ॥१०॥

एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु ।

तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम् ॥११॥

एवा हि त्वामृतुथा यातयन्तं मघा विप्रेभ्यो ददतं शृणोमि ।

किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिन्द्र ॥१२॥

**सायणभाष्यम्**

‘ अदर्दरुत्सम्' इति द्वादशर्चमष्टादशं सूक्तम् । गातुर्नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्- अदर्दर्द्वादश गातुः' इति । गतो विनियोगः ॥

अद॑र्द॒रुत्स॒मसृ॑जो॒ वि खानि॒ त्वम॑र्ण॒वान्ब॑द्बधा॒नाँ अ॑रम्णाः ।

म॒हां॑तमिं॑द्र॒ पर्व॑तं॒ वि यद्वः सृ॒जो वि धारा॒ अव॑ दान॒वं ह॑न् ॥१

अद॑र्दः । उत्स॑म् । असृ॑जः । वि । खानि॑ । त्वम् । अ॒र्ण॒वान् । ब॒द्ब॒धा॒नान् । अ॒र॒म्णाः॒ ।

म॒हान्तं॑म् । इ॒न्द्र॒ । पर्व॑तम् । वि । यत् । व॒रिति॒ वः । सृ॒जः । वि । धाराः॑ । अव॑ । दा॒न॒वम् । ह॒न्निति॑ हन् ॥१

अदर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् । बद्बधानान् । अरम्णाः ।

महान्तम् । इन्द्र । पर्वतम् । वि । यत् । वरिति वः । सृजः । वि । धाराः । अव । दानवम् । हन्निति हन् ॥१

हे इन्द्र “त्वम् “उत्सम् उत्स्यन्दमानं मेघम् “अदर्दः विदारितवानसि । तदनन्तरं “खानि मेघस्थोदकनिर्गमनद्वाराणि “वि “असृजः विशेषेण सृष्टवानसि । किंच “बद्बधानान् बध्यमानान् “अर्णवान् उदकवतो मेघान “अरम्णाः विसर्जयसि क्षारयसीत्यर्थः । अत्र रम्णातिर्विसर्जनकर्मा । हे “इन्द्र यत् यः त्वम् । यदिति लिङ्गव्यत्ययः । “महान्तं प्रभूतं “पर्वतं मेघं “वि “वः विवृतवानसि । “धाराः अपां “वि “सृजः विसृष्टवानसि । अपि च “दानवं दनोः पुत्रं वृत्रमसुरं यद्वोदकस्य दातारं मेघं वा “अव “हन् अभिहतवानसि । अत्र निरुक्तम् - ' अदृणा उत्सम् । उत्स उत्सदनाद्वोत्स्यन्दनाद्वा उनत्तेर्वा स्यात् । व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत् एतान् ' (निरु. १०. ९) इत्यादि ।।

त्वमुत्साँ॑ ऋ॒तुभि॑र्बद्बधा॒नाँ अरं॑ह॒ ऊधः॒ पर्व॑तस्य वज्रिन् ।

अहिं॑ चिदुग्र॒ प्रयु॑तं॒ शया॑नं जघ॒न्वाँ इँ॑द्र॒ तवि॑षीमधत्थाः ॥२

त्वम् । उत्सा॑न् । ऋ॒तुऽभिः॑ । ब॒द्ब॒धा॒नान् । अरं॑हः । ऊधः॑ । पर्व॑तस्य । व॒ज्रि॒न् ।

अहि॑म् । चि॒त् । उ॒ग्र॒ । प्रऽयु॑तम् । शया॑नम् । ज॒घ॒न्वान् । इ॒न्द्र॒ । तवि॑षीम् । अ॒ध॒त्थाः॒ ॥२

त्वम् । उत्सान् । ऋतुऽभिः । बद्बधानान् । अरंहः । ऊधः । पर्वतस्य । वज्रिन् ।

अहिम् । चित् । उग्र । प्रऽयुतम् । शयानम् । जघन्वान् । इन्द्र । तविषीम् । अधत्थाः ॥२

हे "वज्रिन्, वज्रवन्निन्द्र “त्वम् “ऋतुभिः ऋतुषु वृष्टिकालेषु “बद्बधानान् प्रतिबध्यमानान् “उत्सान् मेघान् प्रतिबन्धनादमोचयः' इति शेषः । अपि च “पर्वतस्य मेघस्य संबन्धि “ऊधः जलम् "अरंहः अगमयः । हे “उग्र उद्गूर्णबलेन्द्र “प्रयुतम् उद्युक्तं “शयानं जले शयनं कुर्वन्तम् “अहिं “चित् वृत्रं च "जघन्वान् हतवानसि । हे “इन्द्र त्वं “तविषीं बलम् अधत्थाः अधारयः । वृत्रवधानन्तरमिन्द्रो लोके प्रख्यातो भवतीत्यर्थः ॥

त्यस्यं॑ चिन्मह॒तो निर्मृ॒गस्य॒ वधं॑र्जघान॒ तवि॑षीभि॒रिंद्रः॑ ।

य एक॒ इदं॑प्र॒तिर्मन्यं॑मान॒ आद॑स्माद॒न्यो अं॑जनिष्ट॒ तव्या॑न् ॥३

त्यस्य॑ । चि॒त् । म॒ह॒तः । निः । मृ॒गस्य॑ । वधः॑ । ज॒घा॒न॒ । तवि॑षीभिः । इन्द्रः॑ ।

यः । एकः॑ । इत् । अ॒प्र॒तिः । मन्य॑मानः । आत् । अ॒स्मा॒त् । अ॒न्यः । अ॒ज॒नि॒ष्ट । तव्या॑न् ॥३

त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान । तविषीभिः । इन्द्रः ।

यः । एकः । इत् । अप्रतिः । मन्यमानः । आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥३

निर्जघानायुधं शक्रो वृत्रेण क्षिप्तमोजसा । वृत्रस्य गात्रादन्यो यः प्रादुर्भूतो महासुरः ॥ वृत्रं पूर्वं निहत्येन्द्रो द्वितीयं शुष्णसंज्ञकम् । पुनर्जघानेन्द्र इति पराभिः कीर्तयत्यृषिरिति ॥ “इन्द्रः “महतः प्रभूतस्य “मृगस्य मृगवच्छीघ्रगामिनः “त्यस्य “चित् तस्य वृत्रस्य संबन्धि “वधः आयुधं “तविषीभिः स्वकीयैर्बलैः “निः “जघान निःशेषेणावधीत् । “एक “इत् असहाय एव “अप्रतिः प्रतिद्वन्द्विरहितः “मन्यमानः आत्मानं “यः अस्तीति शेषः । “आत् तदानीम् “अस्मात् वृत्रात् “तव्यान् प्रवृद्धतरः “अन्यः असुरः शुष्णः “अजनिष्ट प्रादुरभूत् ॥

त्यं चि॑दे॒षां स्व॒धया॒ मद॑न्तं मि॒हो नपा॑तं सु॒वृधं॑ तमो॒गां ।

वृष॑प्रभर्मा दान॒वस्य॒ भाम॒ं वज्रे॑ण व॒ज्री नि जं॑घान॒ शुष्णं॑ ॥४

त्यम् । चि॒त् । ए॒षा॒म् । स्व॒धया॑ । मद॑न्तम् । मि॒हः । नपा॑तम् । सु॒ऽवृधं॑म् । त॒म॒ःऽगाम् ।

वृषं॑ऽप्रभर्मा । दा॒न॒वस्यं॑ । भाम॑म् । वज्रे॑ण । व॒ज्री । नि । ज॒घा॒न॒ । शुष्णं॑म् ॥४

त्यम् । चित् । एषाम् । स्वधया । मदन्तम् । मिहः । नपातम् । सुऽवृधम् । तमःऽगाम् ।

वृषऽप्रभर्मा । दानवस्य । भामम् । वज्रेण । वज्री । नि । जघान । शुष्णम् ॥४

“एषां प्राणिनां “स्वधया अन्नेन “मदन्तं मोदमानं सर्वप्राणिनामन्नं स्वयमेव भुञ्जानं “मिहः सेचनसमर्थस्य मेघस्य “नपातं पातारं रक्षितारम् । अत्र नपाच्छब्दः पातरि वर्तते । ' प्राणो वै तनूनपात्स हि तन्वः पाति' (ऐ. ब्रा. २. ४) इति ब्राह्मणम् । “सुवृधं प्रवृद्धं “तमोगां तमः अन्धकारं गच्छन्तं “त्यं “चित् तं च वृत्रं निजघानेति शेषः । “वृषप्रभर्मा वर्षणशीलस्य मेघस्य प्रहर्ता "वज्री वज्रवानिन्द्रः “वज्रेण स्वकीयेनायुधेन “दानवस्य दनुजस्य वृत्रस्य “भामम् । अत्र क्रोधवाचिभामशब्देन क्रोधादुत्पन्नः शुष्णासुरो लक्ष्यते । तं शुष्णासुरं “नि "जघान हतवान् ॥

त्यं चि॑दस्य॒ क्रतु॑भि॒र्निष॑त्तमम॒र्मणो॑ वि॒ददिद॑स्य॒ मर्म॑ ।

यदीं॑ सुक्षत्र॒ प्रभृ॑ता॒ मद॑स्य॒ युयु॑त्सं॒तं॒ तम॑सि ह॒र्म्ये धाः ॥५

त्यम् । चि॒त् । अ॒स्य॒ । क्रतु॑ऽभिः । निऽस॑त्तम् । अ॒म॒र्मणः॑ । वि॒दत् । इत् । अ॒स्य॒ । मर्म॑ ।

यत् । ई॒म् । सु॒ऽक्ष॒त्र॒ । प्रऽभृ॑ता । मद॑स्य । यु॒यु॑त्सन्तम् । तम॑सि । ह॒र्म्ये । धाः ॥५

त्यम् । चित् । अस्य । क्रतुऽभिः । निऽसत्तम् । अमर्मणः । विदत् । इत् । अस्य । मर्म ।

यत् । ईम् । सुऽक्षत्र । प्रऽभृता । मदस्य । युयुत्सन्तम् । तमसि । हर्म्ये । धाः ॥५

“अमर्मणः मर्महीनमात्मानं मन्यमानस्य “अस्य वृत्रस्य “निषत्तं निषण्णं “त्यं “चित् त्यत्तदेव । लिङ्गव्यत्ययः । “मर्म प्राणस्थानम् । यत्र स्थाने विद्धो म्रियते तन्मर्मेत्युच्यते । “अस्य वृत्रस्य “क्रतुभिः प्रज्ञानैर्हे इन्द्र त्वं “विददित् अज्ञासीरेव । “यत् यदा हे “सुक्षत्र सुबलेन्द्र त्वं “मदस्य मादकस्य सोमस्य “प्रभृता प्रभृतौ संभरणे सति “युयुत्सन्तं योद्धुमिच्छन्तम् “ईम् एनं वृत्रं “हर्म्यै हारके “तमसि “धाः न्यदधाः । वृत्र इन्द्रस्य भयात् तमसि प्राविशदित्यर्थः ।।

त्यं चि॑दि॒त्था क॑त्प॒यं शया॑नमसू॒र्ये तम॑सि वावृधा॒नं ।

तं चि॑न्मंदा॒नो वृ॑ष॒भः सु॒तस्यो॒च्चैरिं॑द्रो॑ अप॒गूर्या॑ जघान ॥६

त्यम् । चि॒त् । इ॒त्था । क॒त्प॒यम् । शया॑नम् । अ॒सू॒र्ये । तम॑सि । व॒वृ॒धा॒नम् ।

तम् । चि॒त् । म॒न्दा॒नः । वृ॒ष॒भः । सु॒तस्य॑ । उ॒च्चैः । इन्द्रः॑ । अ॒प॒ऽगूर्य॑ । ज॒घा॒न॒ ॥६

त्यम् । चित् । इत्था । कत्पयम् । शयानम् । असूर्ये । तमसि । ववृधानम् ।

तम् । चित् । मन्दानः । वृषभः । सुतस्य । उच्चैः । इन्द्रः । अपऽगूर्य । जघान ॥६

"सुतस्य अभिषुतेन सोमेन "मन्दानः मोदमानः “वृषभः कामानां वर्षिता “इन्द्रः “उच्चैः ऊर्ध्वम् “अपगूर्य वज्रमुद्यम्य “त्यं “चित् तमेव वृत्रं “जघान अवधीत् । कीदृशम् । “इत्था अमुत्रान्तरिक्षलोके कत्पयम् । कत् सुखकरं पयो यस्य तम् । “शयानम् अप्सु शयनं कुर्वन्तम् “असूर्ये सूर्यरहिते “तमसि अन्धकारे “ववृधानं वर्धमानम् । “तं “चित् इति पुनर्वचनं पूरणार्थम् ॥ ॥ ३२ ॥

उद्यदिं॑द्रो॑ मह॒ते दा॑न॒वाय॒ वध॒र्यमि॑ष्ट॒ सहो॒ अप्र॑तीतं ।

यदीं॒ वज्र॑स्य॒ प्रभृ॑तौ द॒दाभ॒ विश्व॑स्य ज॒ंतोर॑ध॒मं च॑कार ॥७

उत् । यत् । इन्द्रः॑ । म॒ह॒ते । दा॒न॒वाय॑ । वधः॑ । यमि॑ष्ट । सहः॑ । अप्र॑तिऽइतम् ।

यत् । ई॒म् । वज्र॑स्य । प्रऽभृ॑तौ । द॒दाभ॑ । विश्व॑स्य । ज॒न्तोः । अ॒ध॒मम् । च॒का॒र॒ ॥७

उत् । यत् । इन्द्रः । महते । दानवाय । वधः । यमिष्ट । सहः । अप्रतिऽइतम् ।

यत् । ईम् । वज्रस्य । प्रऽभृतौ । ददाभ । विश्वस्य । जन्तोः । अधमम् । चकार ॥७

“यत् यदा “इन्द्रो “महते प्रभूताय “दानवाय वृत्रासुराय “सहः शत्रूणामभिभवितृ “अप्रतीतं केनाप्यप्रतिगतं “वधः वज्रम् “उत् "यमिष्ट उदयच्छत् । “यत् यदा “वज्रस्य “प्रभृतौ प्रहृतौ प्रहरणे सति ॥ ‘ हृग्रहोर्भः' इति भत्वम् ॥ “ईम् एनं वृत्रं “ददाभ अहिंसीत् तदा “विश्वस्य सर्वस्य “जन्तोः प्राणिनः “अधमं नीचं “चकार अकरोत् ॥

त्यं चि॒दर्णं॑ मधु॒पं शया॑नमसि॒न्वं व॒व्रं मह्याद॑दु॒ग्रः ।

अ॒पाद॑म॒त्रं म॑ह॒ता व॒धेन॒ नि दु॑र्यो॒ण आ॑वृणङ्मृ॒ध्रवा॑चं ॥८

त्यम् । चि॒त् । अर्णं॑म् । म॒धु॒ऽपम् । शया॑नम् । अ॒सि॒न्वम् । व॒व्रम् । महिं॑ । आद॑त् । उ॒ग्रः ।

अ॒पाद॑म् । अ॒त्रम् । म॒ह॒ता । व॒धेनं॑ । नि । दु॒र्यो॒णे । अ॒वृ॒ण॒क् । मृ॒ध्रऽवा॑चम् ॥८

त्यम् । चित् । अर्णम् । मधुऽपम् । शयानम् । असिन्वम् । वव्रम् । महि । आदत् । उग्रः ।

अपादम् । अत्रम् । महता । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचम् ॥८

“उग्रः उद्गूर्णबलः इन्द्रः "महि महान्तं “त्यं “चित् तमेव वृत्रम् “आदत् आददौ प्रत्यग्रहीत् । कीदृशम् । “अर्णं गन्तारं जलं मेघं वावृत्य “शयानं शयनं कुर्वन्तम् । स्थितवन्तमित्यर्थः । “मधुपं मधुनोऽम्भसः पातारं पालयितारम् “असिन्वं सपत्नानवक्षेप्तारम् ॥ अस्यतेरिदं रूपम् ॥ “वव्रं वृण्वन्तं सर्वमप्याच्छादयन्तम् । स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम् । ( तै. सं. २. ५. २. २ ) इति हि तैत्तिरीयकम् । तदनन्तरमिन्द्रः “दुर्योणे संग्रामे “महता प्रभूतेन “वधेन वज्रेण “अपादं पादरहितम् अमत्रम् अमात्रं परिमाणरहितं "मृध्रवाचं हिंसितवागिन्द्रियम् । जृम्भाभिभूतमित्यर्थः। वृत्रं “नि “अवृणक् नितरामहिंसीत् । तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिताम्' ( तै. सं. २. ५. २. ४ ) इति हि तैत्तिरीयकम् ॥

को अ॑स्य॒ शुष्मं॒ तविं॑षीं वरात॒ एको॒ धना॑ भरते॒ अप्रं॑तीतः ।

इ॒मे चिं॑दस्य॒ ज्रयं॑सो॒ नु दे॒वी इं॑द्र॒स्यौजं॑सो भि॒यसा॑ जिहाते ॥९

कः । अ॒स्य॒ । शुष्मं॑म् । तविं॑षीम् । व॒रा॒ते॒ । एकः॑ । धना॑ । भ॒र॒ते॒ । अप्रं॑तिऽइतः ।

इ॒मे । चि॒त् । अ॒स्य॒ । ज्रयं॑सः । नु । दे॒वी इतिं॑ । इन्द्रं॑स्य । ओजं॑सः । भि॒यसा॑ । जि॒हा॒ते॒ इतिं॑ ॥९

कः । अस्य । शुष्मम् । तविषीम् । वराते । एकः । धना । भरते । अप्रतिऽइतः ।

इमे । चित् । अस्य । ज्रयसः । नु । देवी इति । इन्द्रस्य । ओजसः । भियसा । जिहाते इति ॥९

"अस्य इन्द्रस्य संबन्धिनीं “शुष्मं शोषणीं “तविषीं बलं “कः “वराते निवारयेत् ॥ शुष्मशब्दस्य स्त्रीलिङ्गविशेषणत्वेऽपि नियतलिङ्गत्वात् पुँल्लिङ्गत्वमेव ॥ “अप्रतीतः केनाप्यप्रतिगत इन्द्रः “एकः असहाय एव “धना धनानि शत्रूणां वसूनि “भरते बिभर्ति हरते वा । “देवी देव्यौ द्योतमाने “इमे “चित् एव द्यावापृथिव्यौ “ज्रयसः वेगवतः अस्य “इन्द्रस्य संबन्धिनः “ओजसः बलादुद्भूतेन “भियसा भयेन “नु क्षिप्रं “जिहाते गच्छतः । चलत इत्यर्थः ॥

न्य॑स्मै दे॒वी स्वधि॑तिर्जिहीत॒ इंद्रा॑य गा॒तुरु॑श॒तीव॑ येमे ।

सं यदोजो॑ यु॒वते॒ विश्व॑माभि॒रनु॑ स्व॒धाव्ने॑ क्षि॒तयो॑ नमंत ॥१०

नि । अ॒स्मै॒ । दे॒वी । स्वऽधि॑तिः । जि॒ही॒ते॒ । इन्द्रा॑य । गा॒तुः । उ॒श॒तीऽइ॑व । ये॒मे॒ ।

सम् । यत् । ओजः॑ । यु॒वते॑ । विश्व॑म् । आ॒भिः॒ । अनु॑ । स्व॒धाऽव्ने॑ । क्षि॒तयः॑ । न॒म॒न्त॒ ॥१०

नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इन्द्राय । गातुः । उशतीऽइव । येमे ।

सम् । यत् । ओजः । युवते । विश्वम् । आभिः । अनु । स्वधाऽव्ने । क्षितयः । नमन्त ॥१०

“स्वधितिः स्वधृतिः स्वेन धृता “देवी द्योतमाना द्यौः “अस्मै इन्द्राय “नि “जिहीते नीचत्वेन याति । “गातुः भूमिः “उशतीव कामयमाना योषिदिव “इन्द्राय "येमे आत्मानं नियच्छति । यथेष्टमात्मानं विनियोक्तुं योग्या भवतीत्यर्थः । “यत् यदेन्द्रः “विश्वं समस्तम् “ओजः बलम् “आभिः प्रजाभिः “सं “युवते संयोजयति । इन्द्रः स्वकीयं बलं सर्वासु प्रजासु निहितवानित्यर्थः । “अनु आनुकूल्येन वर्तमानाः "क्षितयः मनुष्याः । क्षितय इति मनुष्यनामैतत् । “स्वधाव्ने बलवते इन्द्राय “नमन्त संनमन्ति प्रह्वीभवन्ति ॥

एकं॒ नु त्वा॒ सत्प॑तिं॒ पांच॑जन्यं जा॒तं शृ॑णोमि य॒शसं॒ जने॑षु ।

तं मे॑ जगृभ्र आ॒शसो॒ नवि॑ष्ठं दो॒षा वस्तो॒र्हव॑मानास॒ इंद्रं॑ ॥११

एक॑म् । नु । त्वा॒ । सत्ऽप॑तिम् । पाञ्च॑ऽजन्यम् । जा॒तम् । शृ॒णो॒मि॒ । य॒शस॑म् । जने॑षु ।

तम् । मे॒ । ज॒गृ॒भ्रे॒ । आ॒ऽशसः॑ । नवि॑ष्ठम् । दो॒षा । वस्तोः॑ । हव॑मानासः । इन्द्र॑म् ॥११

एकम् । नु । त्वा । सत्ऽपतिम् । पाञ्चऽजन्यम् । जातम् । शृणोमि । यशसम् । जनेषु ।

तम् । मे । जगृभ्रे । आऽशसः । नविष्ठम् । दोषा । वस्तोः । हवमानासः । इन्द्रम् ॥११

हे इन्द्र “त्वा त्वाम् “एकं “नु मुख्यमेव “जनेषु सर्वेषु मनुष्येषु मध्येऽहं मन्त्रद्रष्टा “शृणोमि ऋषिमुख्येभ्यः । कीदृशम् । “सत्पतिं सतां पालकं “पाञ्चजन्यं पञ्चजनेभ्यो मनुष्येभ्यो हितं “जातम् उत्पन्नं “यशसं यशोयुक्तम् । “दोषा क्षपायां “वस्तोः वासरे च

“हवमानासः स्तुवन्तः “आशसः कामानां शंसमानाः “मे मदीयाः प्रजाः “नविष्ठम् अतिशयेन स्तुत्यं “तम् “इन्द्रं जगृभ्रे गृह्णन्तु स्वीकुर्वन्तु ॥

एवा हि त्वामृतुथा यातयंतं मघा विप्रेभ्यो ददतं शृणोमि ।

किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिंद्र ॥१२

एव । हि । त्वाम् । ऋतुऽथा । यातयन्तम् । मघा । विप्रेभ्यः । ददतम् । शृणोमि ।

किम् । ते । ब्रह्माणः । गृहते । सखायः । ये । त्वाऽया । निऽदधुः । कामम् । इन्द्र ॥१२

एव । हि । त्वाम् । ऋतुऽथा । यातयन्तम् । मघा । विप्रेभ्यः । ददतम् । शृणोमि ।

किम् । ते । ब्रह्माणः । गृहते । सखायः । ये । त्वाऽया । निऽदधुः । कामम् । इन्द्र ॥१२

“एव एवमुक्तप्रकारेण “हि “ऋतुथा कालेकाले “यातयन्त जन्तून् प्रेरयन्तं हे इन्द्र “त्वां “विप्रेभ्यः स्तोतृभ्यः “मघा मघानि धनानि “ददतं यच्छन्तं “शृणोमि निशामयामि । एतन्मृषैव प्रतिभाति । हे “इन्द्र “त्वाया त्वयि "ये स्तोतारः “कामं स्वकीयाभिलाषं “निदधुः न्यक्षिपन् “ब्रह्माणः बृहन्तः “ते त्वदीयाः “सखायः स्तोतारः “किं “गृहते त्वत्तः किं गृह्णते । ऋषिः स्वकीयाभिलाषप्राप्तिविलम्बनादेवमुक्तवानित्यर्थः ॥ ॥ ३३ ॥ ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके प्रथमोऽध्यायः समाप्तः ॥

# ऋग्वेदः सूक्तं ५.३३

ऋग्वेदः - मण्डल ५
← सूक्तं ५.३२
सूक्तं ५.३३
सूक्तं ५.३४ →
प्राजापत्यः संवरणः

दे. इन्द्रः। त्रिष्टुप्।

महि महे तवसे दीध्ये नॄनिन्द्रायेत्था तवसे अतव्यान् ।
यो अस्मै सुमतिं वाजसातौ स्तुतो जने समर्यश्चिकेत ॥१॥
स त्वं न इन्द्र धियसानो अर्कैर्हरीणां वृषन्योक्त्रमश्रेः ।
या इत्था मघवन्ननु जोषं वक्षो अभि प्रार्यः सक्षि जनान् ॥२॥
न ते त इन्द्राभ्यस्मदृष्वायुक्तासो अब्रह्मता यदसन् ।
तिष्ठा रथमधि तं वज्रहस्ता रश्मिं देव यमसे स्वश्वः ॥३॥
पुरू यत्त इन्द्र सन्त्युक्था गवे चकर्थोर्वरासु युध्यन् ।
ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥४॥
वयं ते त इन्द्र ये च नरः शर्धो जज्ञाना याताश्च रथाः ।
आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥५॥

पपृक्षेण्यमिन्द्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः ।

स न एनीं वसवानो रयिं दाः प्रार्य स्तुषे तुविमघस्य दानम् ॥६॥

एवा न इन्द्रोतिभिरव पाहि गृणतः शूर कारून् ।

उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥७॥

उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।

वहन्तु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥८॥

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।

सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥९॥

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।

मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥१०॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थे प्रथमाध्यायं व्याख्याय व्याकृतिक्षमः ।

सुधीः श्रीसायणाचार्यो द्वितीयं व्याचिकीर्षति ।

तत्रात्रेः पञ्चमे मण्डले तृतीयेऽनुवाके द्वादश सूक्तानि । तत्र 'महि महे ' इति दशर्चं प्रथमं सूक्तम् । प्रजापतिपुत्रः संवरणाख्यः ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तं-- ' महि दश प्राजापत्यः संवरणः' । विनियोगो लैङ्गिकः ॥

महिं म॒हे त॒वसें दीध्ये॒ नॄनिंद्रा॑ये॒त्था त॒वसे॒ अत॑व्यान् ।

यो अ॑स्मै सुम॒तिं वाज॑सातौ स्तु॒तो जने॑ सम॒र्य॑श्चि॒केत॑ ॥१

महि॑ । म॒हे । त॒वसे॑ । दी॒ध्ये॒ । नॄन् । इन्द्रा॑य । इ॒त्था । त॒वसे॑ । अत॑व्यान् ।

यः । अ॒स्मै॒ । सु॒ऽम॒तिम् । वाज॑ऽसातौ । स्तु॒तः । जने॑ । स॒ऽम॒र्यः॑ । चि॒केत॑ ॥१

महि । महे । तवसे । दीध्ये । नॄन् । इन्द्राय । इत्था । तवसे । अतव्यान् ।

यः । अस्मै । सुऽमतिम् । वाजऽसातौ । स्तुतः । जने । सऽमर्यः । चिकेत ॥१

अहं संवरणः “अतव्यान् अत्यन्तमिव दुर्बलः सन् “महि महत् प्रभूतं स्तोत्रं “महे महते “तवसे बलवते “इन्द्राय “इत्था इत्थं वक्ष्यमाणप्रकारेण “दीध्ये दीपयामि प्रकाशयामि । किमर्थम् । “नॄन् । षष्ठ्यर्थे द्वितीया । मनुष्याणामस्मदीयानां “तवसे बलाय । यद्वा । नॄनस्मद्विरोधिनामभिभवायेति शेषः । तदर्थं तवसेऽस्मद्बलाय । “यः इन्द्रः “अस्मै “जने जनाय संवरणाय “वाजसातौ संग्रामे वाजस्य अन्नस्य वा लाभे निमित्ते सति “स्तुतः सन् “सुमतिं “समर्यः मर्त्यैः स्तोतृभिः सहितो यद्वा सह म्रियमाणैर्युध्यमानैर्मरुदादिभिरथवा समरार्हः “चिकेत जानाति ॥

स त्वं न॑ इंद्र धियसा॒नो अ॒र्कैर्हरी॑णां वृष॒न्योक्त्र॑मश्रेः ।

या इ॒त्था म॑घव॒न्नन॒ु जोष॒ं वक्षो॑ अ॒भि प्रार्यः स॑क्षि॒ जना॑न् ॥२

सः । त्वम् । न॒ः । इ॒न्द्र॒ । धि॒य॒सा॒नः । अ॒र्कैः । हरी॑णाम् । वृ॒ष॒न् । योक्त्र॑म् । अ॒श्रे॒ः ।

याः । इ॒त्था । म॒घ॒ऽव॒न् । अनु॑ । जोष॑म् । वक्षः॑ । अ॒भि । प्र । अ॒र्यः । स॒क्षि॒ । जना॑न् ॥२

सः । त्वम् । नः । इन्द्र । धियसानः । अर्कैः । हरीणाम् । वृषन् । योक्त्रम् । अश्रेः ।

याः । इत्था । मघऽवन् । अनु । जोषम् । वक्षः । अभि । प्र । अर्यः । सक्षि । जनान् ॥२

हे “वृषन् वर्षक “इन्द्र “सः प्रसिद्धः “त्वं “नः अस्मान् “धियसानः ध्यायन् “अर्कैः अर्चनसाधनैः स्तोत्रैर्निमित्तभूतैः “हरीणां रथे नियोज्यानामश्वानां “योक्त्रं नियोजनरज्जुम् “अश्रेः आश्रयसि । “याः ॥ लिङ्गव्यत्ययः ॥ यानर्कान् हे “मघवन् “इत्था इत्थं "जोषं प्रीतिम् “अनु “वक्षः अवहः तैर्निमित्तैर्योक्त्रमश्रेरिति । तथा कृत्वा “अर्यः अस्मदरीन् “जनान् “अभि आभिमुख्येन “प्र प्रकृष्टं “सक्षि पराभव ॥

न ते त॑ इंद्रा॒भ्य१॒॑स्मदृ॒ष्वायु॑क्तासो अब्र॒ह्मता॒ यदस॑न् ।

तिष्ठा॒ रथ॒मधि॒ तं व॑ज्रह॒स्ता र॒श्मिं दे॑व यमसे॒ स्वश्वः॑ ॥३

न । ते । ते॒ । इ॒न्द्र॒ । अ॒भि । अ॒स्मत् । ऋ॒ष्व॒ । अयु॑क्तासः । अ॒ब्र॒ह्मता॑ । यत् । अस॑न् ।

तिष्ठ॑ । रथ॑म् । अधि॑ । तम् । व॒ज्र॒ऽह॒स्त॒ । आ । र॒श्मिम् । दे॒व॒ । य॒म॒से॒ । सु॒ऽअश्वः॑ ॥३

न । ते । ते । इन्द्र । अभि । अस्मत् । ऋष्व । अयुक्तासः । अब्रह्मता । यत् । असन् ।

तिष्ठ । रथम् । अधि । तम् । वज्रऽहस्त । आ । रश्मिम् । देव । यमसे । सुऽअश्वः ॥३

हे “ऋष्व महन् “इन्द्र “यत् ये “अस्मत् अस्मत्तः त्वद्भक्तेभ्योऽन्ये 'अयुक्तासः त्वया असंयुक्ताः “असन् आसन् अभवन् "अब्रह्मता । ब्रह्म परिवृढं कर्म । तद्रहितत्वात् “ते नराः “ते त्वदीयाः "न भवन्ति । अतः अस्मद्यज्ञम् “अभि आगन्तुं “तं प्रसिद्धं “रथमधि “तिष्ठ । हे "वज्रहस्त इन्द्र “देव “स्वश्वः त्वं यं रथमारोढुं “रश्मिं प्रग्रहम् “आ “यमसे नियमयसि तमधि तिष्ठ ॥

पु॒रू यत्त॑ इंद्र॒ संत्यु॒क्था गवे॑ च॒कर्थो॒र्वरा॑सु॒ युध्य॑न् ।

त॒त॒क्षे सूर्या॑य चि॒दोक॑सि॒ स्वे वृषा॑ स॒मत्सु॑ दा॒सस्य॒ नाम॑ चित् ॥४

पु॒रु । यत् । ते॒ । इ॒न्द्र॒ । सन्ति॑ । उ॒क्था । गवे॑ । च॒कर्थ॑ । उ॒र्वरा॑सु । युध्य॑न् ।

त॒त॒क्षे । सूर्या॑य । चि॒त् । ओक॑सि । स्वे । वृषा॑ । स॒मत्ऽसु॑ । दा॒सस्य॑ । नाम॑ । चि॒त् ॥४

पुरु । यत् । ते । इन्द्र । सन्ति । उक्था । गवे । चकर्थ । उर्वरासु । युध्यन् ।

ततक्षे । सूर्याय । चित् । ओकसि । स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥४

हे “इन्द्र "ते तव “यत् यदा स्वभूतानि “पुरू पुरूणि बहूनि । “उक्था उक्थानि शस्त्राणि “सन्ति तदा “उर्वरासु सस्योपेतासु भूमिषु निमित्तभूतासु “गवे वृष्ट्युदकाय “युध्यन् जलप्रतिबन्धकान् संहरन् “चकर्थ करोषि भेदनम् । कुत्रेति । “सूर्याय सूर्यस्य "स्वे स्वकीये “ओकसि स्थाने । “वृषा वर्षिता सन् “ततक्षे संपादयसि । “समत्सु संग्रामेषु “दासस्य वृष्टिप्रतिबन्धकर्तुरेतन्नामकस्य असुरस्य “नाम "चित् नामापि ततक्षे नाशयसीत्यर्थः ॥

व॒यं ते त॑ इंद्र॒ ये च॒ नरः॒ शर्धो॑ जज्ञा॒ना या॒ताश्च॒ रथाः॑ ।

आस्मां॑जगम्यादहिशुष्म॒ सत्वा॒ भगो॒ न हव्यः॑ प्रभृ॒थेषु॒ चारुः॑ ॥५

व॒यम् । ते । ते॒ । इ॒न्द्र॒ । ये । च॒ । नरः॑ । शर्धः॑ । ज॒ज्ञा॒नाः । या॒ताः । च॒ । रथाः॑ ।

आ । अ॒स्मान् । ज॒ग॒म्या॒त् । अ॒हि॒ऽशु॒ष्म॒ । सत्वा॑ । भगः॑ । न । हव्यः॑ । प्र॒ऽभृ॒थेषु॑ । चारुः॑ ॥५

वयम् । ते । ते । इन्द्र । ये । च । नरः । शर्धः । जज्ञानाः । याताः । च । रथाः ।

आ । अस्मान् । जगम्यात् । अहिऽशुष्म । सत्वा । भगः । न । हव्यः । प्रऽभृथेषु । चारुः ॥५

हे "इन्द्र "ये "च "नरः कर्मणां नेतार ऋत्विग्यजमाना "वयं स्मः "ते वयं "ते त्वदीयाः । कीदृशा वयम् । "शर्धः बलं "जज्ञानाः उत्पादयन्तः स्तुतिभिः "याताश्च होतुं त्वां प्राप्ताश्च "रथाः रंहणशीलाश्च । किंच हे 'अहिशुष्म । अहिरयनात् । सर्वतो व्याप्तबलेन्द्र त्वदनुग्रहात् "हव्यः स्तुत्यः प्रतिभटेराह्वातव्यो वा "चारुः संगन्ता "सत्वा भृत्यादिः "प्रभृथेषु संग्रामेषु यज्ञेषु वा "अस्मान् "आ "जगम्यात् आगच्छेत् । "भगो "न भग इव हव्यश्चारुः । भगदेवो यथास्मत्सहाय आगच्छति तथा भृत्यादिरागच्छेदित्यर्थः ॥ ॥ १ ॥

प॒पृ॒क्षेण्य॑मिंद्र॒ त्वे ह्योजो॑ नृ॒म्णानि॑ च नृ॒तमा॑नो॒ अम॑र्तः ।

स न॒ एनीं॑ वसवानो र॒यिं दा॒ः प्रार्यः स्तु॑षे तुविम॒घस्य॒ दानं॑ ॥६

प॒पृ॒क्षेण्य॑म् । इ॒न्द्र॒ । त्वे इति॑ । हि । ओज॑ः । नृ॒म्णानि॑ । च॒ । नृ॒तमा॑नः । अम॑र्तः ।

सः । न॒ः । एनी॑म् । व॒स॒वा॒न॒ः । र॒यिम् । दा॒ः । प्र । अ॒र्यः । स्तु॒षे॒ । तु॒वि॒ऽम॒घस्य॑ । दान॑म् ॥६

पपृक्षेण्यम् । इन्द्र । त्वे इति । हि । ओजः । नृम्णानि । च । नृतमानः । अमर्तः ।

सः । नः । एनीम् । वसवानः । रयिम् । दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानम् ॥६

हे "इन्द्र "पपृक्षेण्यं संपर्कार्हं पूज्यं वा "ओजः बलं "त्वे "हि त्वयि खलु। त्वदधीनमित्यर्थः । "नृतमानः नृत्यन् "अमर्तः अमरणधर्मा "सः त्वं "वसवानः आच्छादयन् स्वतेजसा जगत् "नृम्णानि नृमणानि द्रविणानि । वक्ष्यमाणरय्यपेक्षया चशब्दः । "एनीम् एतवर्णां श्वेतवर्णां "रयिं धनं "दाः देहि । अहं च "अर्यः ईश्वरस्य "तुविमघस्य प्रभूतधनस्य च "दानं "प्र "स्तुषे स्तौमि ॥

ए॒वा न॑ इंद्रो॒तिभि॑रव पा॒हि गृ॑ण॒तः शू॑र का॒रून् ।

उ॒त त्वच॒ं दद॑तो॒ वाज॑सातौ पिप्री॒हि मध्व॒ः सुषु॑तस्य॒ चारोः॑ ॥७

ए॒व । न॒ः । इ॒न्द्र॒ । ऊ॒तिऽभि॑ः । अ॒व॒ । पा॒हि । गृ॒ण॒तः । शू॒र॒ । का॒रून् ।

उ॒त । त्वच॑म् । दद॑तः । वाज॑ऽसातौ । पि॒प्री॒हि । मध्व॑ः । सु॒ऽसु॑तस्य । चारो॑ः ॥७

एव । नः । इन्द्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर । कारून् ।

उत । त्वचम् । ददतः । वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥७

हे “शूर “इन्द्र “एव एवं 'नः अस्मान् “गृणतः स्तुवतः "कारून् कर्तॄनृत्विजः “ऊतिभिः रक्षणैः “अव पालय । "उत अपि च “वाजसातौ संग्रामे “त्वचम् आच्छादकं रूपं “ददतः प्रयच्छतः “सुषुतस्य सुष्ठ्वभिषुतस्य “चारोः मनोहरस्य “मध्वः सोमस्य “पिप्रीहि प्रीणयात्मानम् । द्वितीयार्थे षष्ठी । उक्तलक्षणं सोमं पिबेत्यर्थः । अथवा तृतीयार्थे षष्ठी । उक्तलक्षणेन सोमपानेन प्रीणय ॥

उ॒त त्ये मा॑ पौरुकु॒त्स्यस्य॑ सू॒रेस्त्र॒सद॑स्योर्हिर॒णिनो॒ ररा॑णाः ।

वह॑न्तु मा॒ दश॒ श्येता॑सो अस्य गैरिक्षि॒तस्य॒ क्रतु॑भि॒र्नु स॑श्चे ॥८

उ॒त । त्ये । मा॒ । पौ॒रु॒ऽकु॒त्स्यस्य॑ । सू॒रेः । त्र॒सद॑स्योः । हि॒र॒णिनः॑ । ररा॑णाः ।

वह॑न्तु । मा॒ । दश॑ । श्येता॑सः । अ॒स्य॒ । गै॒रि॒ऽक्षि॒तस्य॑ । क्रतु॑ऽभिः । नु । स॒श्चे॒ ॥८

उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः । रराणाः ।

वहन्तु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥८

त्रसदस्युश्च विदथो ध्वन्यश्चेति त्रयो नृपाः । अश्वान्धनानि गाश्चादुर्ऋषये तद्वदत्यृषिः ॥ “उत अपि च “त्ये ते “मा । चतुर्थ्यर्थे द्वितीया । मह्यमित्यर्थः । “रराणाः ॥ रातेर्दानार्थस्य कर्मणि लिटः कानचि रूपम् ।। दत्ता इत्यर्थः । “पौरुकुत्स्यस्य पुरुकुत्सापत्यस्य “सूरेः प्रेरकस्य “हिरणिनः हिरण्यवतः “अस्य “त्रसदस्योः एतन्नामकस्य राजर्षेः ”गैरिक्षितस्य गिरिक्षितगोत्रोत्पन्नस्य “श्येतासः शुभ्रवर्णाः “दश अश्वाः “मा मां “वहन्तु प्रापयन्तु । अहं च “क्रतुभिः कर्मभी रथनियोजनादिभिर्यज्ञादिभिर्वा “नु क्षिप्रं "सश्चे गच्छेयम् ।।

उ॒त त्ये मा॑ मारु॒ताश्व॑स्य॒ शोणा॒ः क्रत्वा॑मघासो वि॒दथ॑स्य रा॒तौ ।

स॒हस्रा॑ मे॒ च्यव॑ताने॒ ददा॑न आनू॒कम॒र्यो वपु॑षे॒ नार्च॑त् ॥९

उ॒त । त्ये । मा॒ । मा॒रु॒तऽअ॑श्वस्य । शोणाः॑ । क्रत्वा॑ऽमघासः । वि॒दथ॑स्य । रा॒तौ ।

स॒हस्रा॑ । मे॒ । च्यव॑तानः । ददा॑नः । आ॒नू॒कम् । अ॒र्यः । वपु॑षे । न । आ॒र्च॒त् ॥९

उत । त्ये । मा । मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः । विदथस्य । रातौ ।

सहस्रा । मे । च्यवतानः । ददानः । आनूकम् । अर्यः । वपुषे । न । आर्चत् ॥९

“उत अपि च “त्ये तेऽश्वा वक्ष्यमाणाः “मारुताश्वस्य । मरुत्सदृशवेगाश्ववान्मरुताश्वः । तदपत्यस्य “विदथस्य एतन्नामकस्य राज्ञः “शोणाः शोणवर्णाः “क्रत्वामघासः क्रतुना कर्मणा शीघ्रगमनादिलक्षणेन माहनीया अश्वाः “रातौ दाने विनियुक्ता मां वहन्तीति शेषः

। किंच “सहस्रा सहस्राणि अपरिमितानि धनानि अर्यः पूज्यस्य “मे। चतुर्थ्यर्थे षष्ठी । पूज्याय मह्यं “च्यवतानः च्यावयन् “ददानः प्रयच्छन् सः “आनूकम् आभरणं च “वपुषे स्वशरीरालंकाराय “आर्चत् प्रयच्छत् । “न इति चार्थे ।

उ॒त त्ये मा॑ ध्व॒न्य॑स्य॒ जुष्टा॑ लक्ष्म॒ण्य॑स्य सु॒रुचो॒ यता॑नाः ।

म॒ह्ना रा॒यः सं॒वर॑णस्य॒ ऋषे॑र्व्र॒जं न गाव॒ः प्रय॑ता॒ अपि॑ ग्मन् ॥१०

उ॒त । त्ये । मा॒ । ध्व॒न्य॑स्य । जुष्टाः॑ । ल॒क्ष्म॒ण्य॑स्य । सु॒ऽरुचः॑ । यता॑नाः ।

म॒ह्ना । रा॒यः । स॒म्ऽवर॑णस्य । ऋषेः॑ । व्र॒जम् । न । गावः॑ । प्रऽय॑ताः । अपि॑ । ग्म॒न् ॥१०

उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः । यतानाः ।

मह्ना । रायः । सम्ऽवरणस्य । ऋषेः । व्रजम् । न । गावः । प्रऽयताः । अपि । ग्मन् ॥१०

“उत अपि च “त्ये ते वक्ष्यमाणाः रायः “ध्वन्यस्य ध्वन्यनामकस्य “लक्ष्मण्यस्य लक्ष्मणपुत्रस्य राज्ञः संबन्धिनोऽश्वाः "जुष्टाः मां प्राप्ताः “सुरुचः शोभनदीप्तयः “यतानाः वहनाय यतमानाः । “रायः “मह्ना महत्त्वेन युक्ता रायः “प्रयताः दत्ताः सत्यः “संवरणस्य “ऋषेः "अपि “ग्मन् अपिगताः प्राप्ताः । मद्गृहमिति शेषः। “व्रजं “न “गावः गोष्ठं गाव इव । यद्वा नेति चार्थे । गावश्च मम व्रजमपिग्मन् । अत्रैन्द्रे सूक्ते ‘प्रायेणैन्द्रे मरुतो राज्ञां च दानस्तुतयः' ( अनु. २. २२ ) इत्युक्तत्वाद्राज्ञां दानस्तुतिरविरुद्धा ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं ५.३४

ऋग्वेदः - मण्डल ५
← सूक्तं ५.३३ सूक्तं ५.३४ सूक्तं ५.३५ →
प्राजापत्यः संवरणः

दे. इन्द्रः। जगती, ९ त्रिष्टुप्।

---

अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते ।

सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन ॥१॥

आ यः सोमेन जठरमपिप्रतामन्दत मघवा मध्वो अन्धसः ।

यदीं मृगाय हन्तवे महावधः सहस्रभृष्टिमुशना वधं यमत् ॥२॥

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।

अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥३॥

यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते ।

वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥४॥

न पञ्चभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन ।

जिनाति वेदमुया हन्ति वा धुनिरा देवयुं भजति गोमति व्रजे ॥५॥

वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः ।

इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥६॥

समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु ।

दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत् ॥७॥

सं यज्जनौ सुधनौ विश्वशर्धसाववेदिन्द्रो मघवा गोषु शुभ्रिषु ।

युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥८॥

सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न उपमां केतुमर्यः ।

तस्मा आपः संयतः पीपयन्त तस्मिन्क्षत्रममवत्त्वेषमस्तु ॥९॥

**सायणभाष्यम्**

‘ अजातशत्रुम्' इति नवर्चं द्वितीयं सूक्तं प्राजापत्यस्य संवरणस्यार्षमैन्द्रम् । नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । ‘ अजातशत्रु नव त्रिष्टुबन्तम्' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

अजा॑तशत्रुम॒जरा॒ स्व॑र्व॒त्यनु॑ स्व॒धामि॑ता द॒स्ममीं॑यते ।

सु॒नोत॑न॒ पच॑त॒ ब्रह्म॑वाहसे पुरुष्टु॒ताय॑ प्रत॒रं द॑धातन ॥१

अजा॑तऽशत्रुम् । अ॒जरा॑ । स्वः॑ऽवती । अनु॑ । स्व॒धा । अमि॑ता । द॒स्मम् । ई॒य॒ते॒ ।

सु॒नोत॑न । पच॑त । ब्रह्म॑ऽवाहसे । पु॒रु॒ऽस्तु॒ताय॑ । प्र॒ऽत॒रम् । द॒धा॒त॒न॒ ॥१

अजातऽशत्रुम् । अजरा । स्वःऽवती । अनु । स्वधा । अमिता । दस्मम् । ईयते ।

सुनोतन । पचत । ब्रह्मऽवाहसे । पुरुऽस्तुताय । प्रऽतरम् । दधातन ॥१

“अजातशत्रुम् । अनुत्पन्नाः शातयितारो यस्य तम् । “दस्मं शत्रूणामुपक्षपयितारम् “अजरा अक्षीणा “स्वर्वती स्वरणवती “अमिता अपरिमिता “स्वधा अन्नं हविः “अनु “ईयते अनुप्राप्नोति । तदर्थं हे ऋत्विजः "सुनोतन अभिषुणुत। “पचत पुरोडाशादिकम् । कस्मै । “ब्रह्मवाहसे ब्रह्मणः परिवृढस्य स्तोत्रस्य वाहकाय “पुरुष्टुताय बहुभिः स्तुतायेन्द्राय । “प्रतरं प्रकृष्टतरं “दधातन धारयत स्वस्वोचितकर्म ।।

आ यः सोमे॑न ज॒ठर॒मपि॑प्र॒तामं॑दत म॒घवा॒ मध्वो॒ अंध॑सः ।

यदीं॑ मृ॒गाय॒ हंत॑वे म॒हाव॑धः स॒हस्र॑भृष्टिमु॒शना॑ व॒धं यम॑त् ॥२

आ । यः । सोमे॑न । ज॒ठर॑म् । अपि॑प्रत । अम॑न्दत । म॒घऽवा॑ । मध्वः॑ । अन्ध॑सः ।

यत् । ई॒म् । मृ॒गाय॑ । हन्त॑वे । म॒हाऽव॑धः । स॒हस्र॑ऽभृष्टिम् । उ॒शना॑ । व॒धम् । यम॑त् ॥२

आ । यः । सोमेन । जठरम् । अपिप्रत । अमन्दत । मघऽवा । मध्वः । अन्धसः ।

यत् । ईम् । मृगाय । हन्तवे । महाऽवधः । सहस्रऽभृष्टिम् । उशना । वधम् । यमत् ॥२

“यः “मघवा “सोमेन “जठरं स्वकीयम् “आ सर्वतः “अपिप्रत अपूरयत् “मध्वः मधुररसस्य “अन्धसः सोमस्य पानेन "अमन्दत अतृप्यत्। “यत् यदा “ईम् अयं “मृगाय एतन्नामकाय असुराय “हन्तवे तं हन्तुं “महावधः महावज्रः “सहस्रभृष्टिः अपरिमिततेजाः “उशना कामयमानः शत्रुं यद्वोशनसा सह “वधं वज्रं “यमत् उदयच्छत् तदापिप्रत अमन्दत च ।।

यो अ॑स्मै घ्रं॒स उ॒त वा॒ य ऊध॑नि॒ सोमं॑ सु॒नोति॒ भव॑ति द्यु॒माँ अह॑ ।

अपा॑प श॒क्रस्त॑त॒नुष्टिं॑मूहति त॒नूशु॑भ्रं म॒घवा॒ यः क॑वास॒खः ॥३

यः । अ॒स्मै॒ । घ्रं॒से । उ॒त । वा॒ । यः । ऊध॑नि । सोम॑म् । सु॒नोति॑ । भव॑ति । द्यु॒ऽमान् । अह॑ ।

अप॑ऽअप । श॒क्रः । त॒त॒नुष्टि॑म् । ऊ॒ह॒ति॒ । त॒नूऽशु॑भ्रम् । म॒घऽवा॑ । यः । क॒व॒ऽस॒खः ॥३

यः । अस्मै । घ्रंसे । उत । वा । यः । ऊधनि । सोमम् । सुनोति । भवति । द्युऽमान् । अह ।

अपऽअप । शक्रः । ततनुष्टिम् । ऊहति । तनूऽशुभ्रम् । मघऽवा । यः । कवऽसखः ॥३

“यः यजमानः “अस्मै इन्द्राय “घ्रंसे । अहर्नामैतत् । गृह्यन्तेऽस्मिन् रसा इति घ्रंसः । तस्मिन् । “उत “वा अथवा “यः यजमानः “ऊधनि । उद्धततरं भवत्युन्नद्धमिति वोधो रात्रिः । स्नेहप्रदानरसाभ्यामूधसि रात्रौ च समत्वाद्रात्रिरप्यूध उच्यते । अहनि रात्रौ च “सोमं "सुनोति सः “भवति “द्युमान् दीप्तिमान् । “अह इति विनिग्रहार्थीयः । किंच “शक्रः शक्तोऽयमिन्द्रः “ततनुष्टिम् । ततं धर्मसंततिं नुदति वष्टि कामयते कामानिति ततनुष्टिः । तं “तनूशुभ्रम् । तनूः शुभ्रा शोभनीया अलंकारादिभिः यस्य तम् । तादृशं स्वपोषकम् अयज्वानम् अप “ऊहति । अपरोऽपशब्दः पूरणः । “मघवा धनवान् “यः च "कवासखः कुत्सितपुरुषसहायस्तमपोहतीति ॥

यस्याव॑धीत्पि॒तरं॒ यस्य॑ मा॒तरं॒ यस्य॑ श॒क्रो भ्रात॑रं॒ नात॑ ईषते ।

वेतीद्व॑स्य॒ प्रय॑ता यतंक॒रो न किल्बि॑षादीषते॒ वस्व॑ आक॒रः ॥४

यस्य॑ । अव॑धीत् । पि॒तर॑म् । यस्य॑ । मा॒तर॑म् । यस्य॑ । श॒क्रः । भ्रात॑रम् । न । अतः॑ । ई॒ष॒ते॒ ।

वेति॑ । इत् । ऊं॒ इति॑ । अ॒स्य॒ । प्रऽय॑ता । य॒त॒म्ऽक॒रः । न । किल्बि॑षात् । ई॒ष॒ते॒ । वस्वः॑ । आ॒ऽक॒रः ॥४

यस्य । अवधीत् । पितरम् । यस्य । मातरम् । यस्य । शक्रः । भ्रातरम् । न । अतः । ईषते ।

वेति । इत् । ऊं इति । अस्य । प्रऽयता । यतम्ऽकरः । न । किल्बिषात् । ईषते । वस्वः । आऽकरः ॥४

“शक्रः शक्तोऽयं “यस्य अयज्वनः “पितरं "अवधीत् हतवान् । “यस्य च “मातरम् अवधीत् । “यस्य च "भ्रातरं "अतः अस्मादयज्वनः सकाशात् “न “ईषते । न बिभेति न गच्छति वा । किंतु “अस्य “प्रयता प्रदत्तानि हवींषि “वेतीद् कामयत एव । अयज्वानं शिक्षयित्वा नियोजयतीत्यर्थः । “यतंकर: यमनकर्ता “वस्वः वसुनः धनस्य "आकरः अभिमुख्यकर्ता यः “किल्बिषात् पित्रादिवधयुक्तात् “न “ईषते न चलति न बिभेति वा । इन्द्रस्य अस्तोतॄणां हतिः ‘इन्द्रो यतीन् सालावृकेभ्यः प्रयच्छत् अन्तरिक्षे पौलोमान् पृथिव्यां कालकाञ्ज्यानरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यादिश्रुतिषु प्रसिद्धा ॥

न प॒ंचभि॑र्द॒शभि॑र्वष्ट्या॒रभं॒ नासु॑न्वता सचते॒ पुष्य॑ता च॒न ।

जि॒नाति॒ वेद॑मु॒या हंति॑ वा॒ धुनि॒रा दे॑व॒युं भ॑जति॒ गोम॑ति व्र॒जे ॥५

न । प॒ञ्चऽभिः॑ । द॒शऽभिः॑ । व॒ष्टि॒ । आ॒ऽरभ॑म् । न । असु॑न्वता । स॒च॒ते॒ । पुष्य॑ता । च॒न ।

जि॒नाति॑ । वा॒ । इत् । अ॒मु॒या । हन्ति॑ । वा॒ । धुनिः॑ । आ । दे॒व॒ऽयुम् । भ॒ज॒ति॒ । गोऽम॑ति । व्र॒जे ॥५

न । पञ्चऽभिः । दशऽभिः । वष्टि । आऽरभम् । न । असुन्वता । सचते । पुष्यता । चन ।

जिनाति । वा । इत् । अमुया । हन्ति । वा । धुनिः । आ । देवऽयुम् । भजति । गोऽमति । व्रजे ॥५

अयमिन्द्रः “पञ्चभिर्दशभिः वा सहायैः “आरभम् आरम्भं शत्रुहननायालम्बनं “न “वष्टि साहाय्यं नापेक्षत इत्यर्थः । यद्वा । अमुमिन्द्रं पञ्चभिर्दशभिर्वा यज्ञादन्यैरुपायैः आरभम् आरब्धुमुद्योगं कर्तुं न वष्टि न कामयते । “असुन्वता अभिषवमकुर्वता सह “पुष्यता “चन बन्ध्वादीनपोषयतापि “न “सचते न संगच्छते । असुन्वन्तम् अभिषवमकुर्वाणम् अयष्टारम् अपुष्णन्तं च न प्राप्नोतीत्यर्थः । न केवलमप्राप्तिमात्रं किंतु “जिनाति “वा । वाशब्दश्चार्थे । जिनाति च । बाधते । “इत् इति पूरणः । “हन्ति “वा “अमुया अमुमयष्टारं “धुनिः कम्पकः शत्रूणाम् । “देवयुं देवमिन्द्रं कामयमानं यजमानं “गोमति “व्रजे “आ “भजति योजयतीत्यर्थः ॥ ॥ ३ ॥

वि॒त्वक्ष॑ण॒: समृ॑तौ चक्रमास॒जोऽसु॑न्वतो॒ विषु॑णः सुन्व॒तो वृ॒धः ।

इंद्रो॒ विश्व॑स्य दमि॒ता वि॒भीष॑णो यथाव॒शं न॑यति॒ दास॒मार्य॑: ॥६

वि॒ऽत्वक्ष॑णः । सम्ऽऋ॑तौ । च॒क्र॒म्ऽआ॒स॒जः । असु॑न्वतः । विषु॑णः । सु॒न्व॒तः । वृ॒धः ।

इन्द्र॑: । विश्व॑स्य । द॒मि॒ता । वि॒ऽभीष॑णः । य॒था॒ऽव॒शम् । न॒य॒ति॒ । दास॑म् । आर्य॑: ॥६

विऽत्वक्षणः । सम्ऽऋतौ । चक्रम्ऽआसजः । असुन्वतः । विषुणः । सुन्वतः । वृधः ।

इन्द्रः । विश्वस्य । दमिता । विऽभीषणः । यथाऽवशम् । नयति । दासम् । आर्यः ॥६

"समृतौ संग्रामे "वित्वक्षणः विशेषेण तनूकर्ता शत्रूणां तदर्थं "चक्रमासजः रथचक्रस्यासंजयिता "असुन्वतः अयजमानस्य "विषुणः पराङ्मुखः "सुन्वतः यजमानस्य "वृधः वर्धयिता "इन्द्रः "विश्वस्य "दमिता शिक्षयिता विभीषणः भयजनकः "आर्यः स्वामी "यथावशं यथेच्छं "दासं दासकर्माणं जनं "नयति स्ववशम् ॥

समीं॑ प॒णेर॑जति॒ भोज॑नं मु॒षे वि दा॒शुषे॑ भजति सू॒नर॒ं वसु॑ ।

दु॒र्गे च॒न ध्रि॑यते॒ विश्व॒ आ पु॒रु जनो॒ यो अ॑स्य॒ तवि॑षी॒मचु॑क्रुधत् ॥७

सम् । ई॒म् । प॒णेः । अ॒ज॒ति॒ । भोज॑नम् । मु॒षे । वि । दा॒शुषे॑ । भ॒ज॒ति॒ । सू॒नर॑म् । वसु॑ ।

दुः॒ऽगे । च॒न । ध्रि॒य॒ते॒ । विश्व॑: । आ । पु॒रु । जन॑: । यः । अ॒स्य॒ । तवि॑षीम् । अचु॑क्रुधत् ॥७

सम् । ईम् । पणेः । अजति । भोजनम् । मुषे । वि । दाशुषे । भजति । सूनरम् । वसु ।

दुःऽगे । चन । ध्रियते । विश्वः । आ । पुरु । जनः । यः । अस्य । तविषीम् । अचुक्रुधत् ॥७

"ईम् अयमिन्द्रः "पणेः वणिज इव लुब्धकस्यादातुः "भोजनं धनमन्नं वा "मुषे चोरयितुं "सम् "अजति सम्यक् गच्छति । गत्वा चादाय "दाशुषे हविर्दात्रे यजमानाय "वि "भजति "सूनरं शोभनमनुष्यं "वसु धनम् । अयष्टुर्धनमाकृष्य यष्ट्रे प्रयच्छतीत्यर्थः । न केवलं वणिग्धनप्रदानमात्रं किंतु "पुरु पुरुणि "दुर्गे "चन दुःखेन गन्तव्ये आपद्यपि "विश्वः सर्वोऽपि दातृजनः "आ "ध्रियते आस्थाप्यते । "यः "जनः "अस्य इन्द्रस्य "तविषीं बलम् "अचुक्रुधत् विहिताकरणादिना तस्य पणेरजतीति पूर्वशेषः । यद्वा । योऽस्य तविषीमचुक्रुधत् स सर्वोऽपि जनो दुर्गे चनाध्रियत इन्द्रेण ॥ चनेत्येकपदमध्येतृसंप्रदायप्राप्तम् ॥

सं यज्जनौ॑ सु॒धनौ॑ वि॒श्वश॑र्धसा॒ववे॒दिंद्रो॑ म॒घवा॒ गोषु॑ शु॒भ्रिषु॑ ।

युजं॒ ह्य१॒॑न्यमकृ॑त प्रवेप॒न्युदीं॒ गव्यं॑ सृजते॒ सत्व॑भि॒र्धुनिः॑ ॥८

सम् । यत् । जनौ॑ । सु॒ऽधनौ॑ । वि॒श्वऽश॑र्धसौ । अवे॑त् । इन्द्रः॑ । म॒घऽवा॑ । गोषु॑ । शु॒भ्रिषु॑ ।

युजं॑म् । हि । अ॒न्यम् । अकृ॑त । प्र॒ऽवे॒प॒नी । उत् । ई॒म् । गव्यं॑म् । सृ॒ज॒ते॒ । सत्व॑ऽभिः । धुनिः॑ ॥८

सम् । यत् । जनौ । सुऽधनौ । विश्वऽशर्धसौ । अवेत् । इन्द्रः । मघऽवा । गोषु । शुभ्रिषु ।

युजम् । हि । अन्यम् । अकृत । प्रऽवेपनी । उत् । ईम् । गव्यम् । सृजते । सत्वऽभिः । धुनिः ॥८

“सम् अवेत् संजानाति “यत् यदा “जनौ परस्परप्रतिद्वन्द्विनौ "सुधनौ शोभनधनौ “विश्वशर्धसौ व्याप्तबलौ बहूत्साहौ वा “मघवा धनवान् “इन्द्रः "गोषु “शुभ्रिषु शोभनासु गोषु निमित्तभूतासु “अन्यं यष्टारं "युजं सहायम् “अकृत कृतवान् "प्रवेपनी शत्रूणां प्रवेपनवान् । “ईम् अस्मै “गव्यं गोसमूहम् “उत् “सृजते "सत्वभिः मरुद्भिः सह “धुनिः मेघानां कम्पयिता । इन्द्रो यजमानम् अयजमानं वा यं जानाति गोनिमित्तं ज्ञात्वा यज्वने गोसमूहं प्रयच्छतीत्यर्थः ॥

स॒ह॒स्र॒सामाग्नि॑वेशिं गृणीषे॒ शत्रि॑मग्न उप॒मां के॒तुम॒र्यः ।

तस्मा॒ आपः॑ सं॒यतः॑ पीपयंत॒ तस्मि॒न्क्ष॒त्रमम॑वत्त्वे॒षम॑स्तु ॥९

स॒ह॒स्र॒ऽसाम् । आग्नि॑ऽवेशिम् । गृ॒णी॒षे॒ । शत्रि॑म् । अ॒ग्ने॒ । उ॒प॒ऽमाम् । के॒तुम् । अ॒र्यः ।

तस्मै॑ । आपः॑ । स॒म्ऽयतः॑ । पी॒प॒य॒न्त॒ । तस्मि॑न् । क्ष॒त्रम् । अम॑ऽवत् । त्वे॒षम् । अ॒स्तु॒ ॥९

सहस्रऽसाम् । आग्निऽवेशिम् । गृणीषे । शत्रिम् । अग्ने । उपऽमाम् । केतुम् । अर्यः ।

तस्मै । आपः । सम्ऽयतः । पीपयन्त । तस्मिन् । क्षत्रम् । अमऽवत् । त्वेषम् । अस्तु ॥९

अग्निवेशिसुतं शत्रिमसंख्यातधनप्रदम् । आशास्त ऋषिरन्त्यर्चा प्रजापतिसुतः सुधीः ॥ “अर्यः अहं “सहस्रसाम् अपरिमितधनप्रदम् "आग्निवेशिम् अग्निवेशिसुतं “शत्रिम् एतन्नामकं राजर्षिं “गृणीषे गृणे स्तौमि । हे “अग्ने अङ्गनादिगुणविशिष्टेन्द्र । कीदृशं तम् । “उपमाम् उपमानभूतं "केतुं प्रज्ञापकं प्रख्यातमित्यर्थः । “तस्मा “आपः “संयतः सम्यक् गच्छन्त्यः “पीपयन्त प्यायन्ताम् । “तस्मिन् राज्ञि “क्षत्रं धनम् “अमवत् बलसहितं “त्वेषं दीप्तम् “अस्तु इति ॥ ॥ ४ ॥

# ऋग्वेदः सूक्तं ५.३५



दे. इन्द्रः। अनुष्टुप्, ८ पङ्क्तिः।

---

यस्ते साधिष्ठोऽवस इन्द्र क्रतुष्टमा भर ।

अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरम् ॥१॥

यदिन्द्र ते चतस्रो यच्छूर सन्ति तिस्रः ।

यद्वा पञ्च क्षितीनामवस्तत्सु न आ भर ॥२॥

आ तेऽवो वरेण्यं वृषन्तमस्य हूमहे ।

वृषजूतिर्हि जज्ञिष आभूभिरिन्द्र तुर्वणिः ॥३॥

वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः ।

स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम् ॥४॥

त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः ।

सर्वरथा शतक्रतो नि याहि शवसस्पते ॥५॥

त्वामिद्धृत्रहन्तम जनासो वृक्तबर्हिषः ।

उग्रं पूर्वीषु पूर्व्यं हवन्ते वाजसातये ॥६॥

अस्माकमिन्द्र दुष्टरं पुरोयावानमाजिषु ।

सयावानं धनेधने वाजयन्तमवा रथम् ॥७॥

अस्माकमिन्द्रेहि नो रथमवा पुरंध्या ।

वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥८॥

**सायणभाष्यम्**

यस्ते साधिष्ठः' इत्यष्टर्चं तृतीयं सूक्तम् । अङ्गिरोगोत्रः प्रभूवसुर्नाम ऋषिः । अन्त्या पङ्क्तिः । पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टुभः । इन्द्रो देवता । ' यस्तेऽष्टौ प्रभूवसुराङ्गिरसः पङ्क्त्यन्तम् ' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । आभिप्लविकेषूक्थ्येषु तृतीयसवने आद्यस्तृचोऽच्छावाकस्य वैकल्पिकोऽनुरूपः । सूत्रितं च -- यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविः ' ( आश्व. श्रौ. ७. ८) इति । द्वितीयतृतीययोः स्वरसाम्नोश्चाद्यौ तृचावनुरूपौ। “यस्ते साधिष्ठोऽवस इति षळनुष्टुभः ' ( आश्व. श्रौ. ८. ५) इति हि सूत्रितम् ॥

यस्ते॒ साधि॒ष्ठोऽव॑स॒ इंद्र॒ क्रतु॒ष्टमा भ॑र ।

अ॒स्मभ्यं॑ चर्षणी॒सहं॒ सस्निं॒ वाजे॑षु दु॒ष्टरं॑ ॥१

यः । ते॒ । साधि॑ष्ठः । अव॑से । इन्द्र॑ । क्रतुः॑ । तम् । आ । भ॒र॒ ।

अ॒स्मभ्य॑म् । च॒र्ष॒णि॒ऽसह॑म् । सस्नि॑म् । वाजे॑षु । दु॒स्तर॑म् ॥१

यः । ते । साधिष्ठः । अवसे । इन्द्र । क्रतुः । तम् । आ । भर ।

अस्मभ्यम् । चर्षणिऽसहम् । सस्निम् । वाजेषु । दुस्तरम् ॥१

हे “इन्द्र "ते तव "यः “साधिष्ठः अतिशयेन साधकः “क्रतुः उक्तलक्षणं कर्म प्रज्ञा वास्ति “तं क्रतुं नः “अवसे अस्मद्रक्षणाय “अस्मभ्यम् “आ “भर आहर । कीदृशं तम् । “चर्षणीसहं सर्वेषां मनुष्याणामभिभवितारं "सस्निं संस्नातं शुद्धं “वाजेषु संग्रामेषु "दुष्टरम् अन्यैरनभिभाव्यम् ॥

यदिंद्र ते चतंस्रो यच्छूंर संतिं तिस्रः ।

यद्वा पंचं क्षितीनामवस्तत्सु न आ भंर ॥२

यत् । इन्द्र । ते । चतंस्रः । यत् । शूर । सन्तिं । तिस्रः ।

यत् । वा । पञ्चं । क्षितीनाम् । अवः । तत् । सु । नः । आ । भर ॥२

यत् । इन्द्र । ते । चतस्रः । यत् । शूर । सन्ति । तिस्रः ।

यत् । वा । पञ्च । क्षितीनाम् । अवः । तत् । सु । नः । आ । भर ॥२

हे "इन्द्र "ते तव "यत् या ऊतयः "चतस्रः चतुर्षु वर्णेषु संश्रिताः "सन्ति "यत् याश्च हे "शूर "तिस्रः त्रिषु लोकेषु वर्तमानाः "यद्वा । वाशब्दश्चार्थे । यत् याश्च "पञ्च क्षितीनां पञ्चजनसंबन्धिन्य ऊतयः सन्ति "तत् सर्वम् "अवः रक्षणं "सु सुष्ठु "नः अस्मभ्यम् "आ "भर आहरेति ॥

आ तेऽवो वरेंण्यं वृषंतमस्य हूमहे ।

वृषंजूतिर्हि जंज्ञिष आभूभिंरिंद्र तुर्वणिंः ॥३

आ । ते । अवंः । वरेंण्यम् । वृषंन्ऽतमस्य । हूमहे ।

वृषंऽजूतिः । हि । जज्ञिषे । आऽभूभिंः । इन्द्र । तुर्वणिंः ॥३

आ । ते । अवः । वरेण्यम् । वृषन्ऽतमस्य । हूमहे ।

वृषऽजूतिः । हि । जज्ञिषे । आऽभूभिः । इन्द्र । तुर्वणिः ॥३

हे "इन्द्र "वृषन्तमस्य फलानां वर्षकतमस्य "ते तव "अवः रक्षणं गमनं वा "वरेण्यं वरणीयम् "आ "हूमहे आह्वयामः । हे इन्द्र "वृषजूतिः वर्षणगमनः "तुर्वणिः तूर्णवनिर्हिंसको वा त्वम् "आभूभिः सर्वतो भवद्भिर्व्याप्तैर्मरुद्भिः सह अवः "हि "जज्ञिषे उत्पादयसि खलु । तेऽव आह्वयाम इति । यद्वा । वृषगमनः सन् यस्माद्यज्ञमागत्य फलं जज्ञिषे तस्मात्तेऽवो हूमह इति ।।

वृषा ह्यसि राधंसे जज्ञिषे वृष्णिं ते शवंः ।

स्वक्षंत्रं ते धृषन्मनंः सत्राहमिंद्र पौंस्यं ॥४

वृषा । हि । असि । राधसे । ज॒ज्ञि॒षे । वृष्णि । ते॒ । शवः ।

स्वऽक्षत्रम् । ते॒ । धृ॒षत् । मनः । स॒त्रा॒ऽहम् । इ॒न्द्र॒ । पौंस्यम् ॥४

वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः ।

स्वऽक्षत्रम् । ते । धृषत् । मनः । सत्राऽहम् । इन्द्र । पौंस्यम् ॥४

हे "इन्द्र "राधसे यजमानानां समृद्धये "वृषा "ह्यसि फलस्य वर्षकोऽसि खलु । यद्वा । वृषा खल्वसि । राधसे धनार्थं "जज्ञिषे उत्पद्यसे । "ते "शवः बलं "वृष्णि वर्षितृ । "ते "मनः "स्वक्षत्रं स्वायत्तबलं "धृषत् धर्षकं विरोधिनाम् । हे इन्द्र ते "पौंस्यं पुंस्त्वं "सत्राहं संघहन्तृ ॥

त्वं तमिंद्र॒ मर्त्यंममित्र॒यंतमद्रिवः ।

स॒र्व॒र॒था शंतक्रतो॒ नि याहि शवसस्पते ॥५

त्वम् । तम् । इ॒न्द्र॒ । मर्त्यम् । अ॒मि॒त्र॒ऽयन्तम् । अ॒द्रि॒ऽव॒ः ।

स॒र्व॒ऽर॒था । श॒त॒क्र॒तो॒ इति शतऽक्रतो । नि । या॒हि॒ । श॒व॒स॒ः । प॒ते॒ ॥५

त्वम् । तम् । इन्द्र । मर्त्यम् । अमित्रऽयन्तम् । अद्रिऽवः ।

सर्वऽरथा । शतक्रतो इति शतऽक्रतो । नि । याहि । शवसः । पते ॥५

हे "इन्द्र "त्वं "तम् "अमित्रयन्तं शत्रुत्वमाचरन्तं शत्रुं वेच्छन्तं "मर्त्यं हे "अद्रिवः वज्रवन्निन्द्र "सर्वरथा सर्वत्र व्याप्तेन रथेन ॥ 'सुपां सुलुक् ' इत्याकारः ॥ हे "शतक्रतो हे "शवसस्पते बलस्य पालक "नि "याहि नितरां गच्छाभिभवितुम् ॥ ॥ ५ ॥

त्वामिद्वृंत्रहंतम॒ जनासो वृ॒क्तबर्हिषः ।

उ॒ग्रं पू॒र्वीषु॑ पू॒र्व्यं हवंते॒ वाजसातये ॥६

त्वाम् । इत् । वृ॒त्र॒ह॒न्ऽत॒म॒ । जनासः । वृ॒क्तऽबर्हिषः ।

उ॒ग्रम् । पू॒र्वीषु॑ । पू॒र्व्यम् । हवन्ते । वाजऽसातये ॥६

त्वाम् । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः ।

उग्रम् । पूर्वीषु । पूर्व्यम् । हवन्ते । वाजऽसातये ॥६

हे “वृत्रहन्तम अतिशयेन शत्रूणां हन्तरिन्द्र “त्वामित् त्वामेव “जनासः जनाः “वृक्तबर्हिषः आच्छादितदर्भाः । प्रवृत्तयज्ञा इत्यर्थः । “उग्रम् उद्गूर्णबलं “पूर्वीषु बह्वीषु प्रजासु मध्ये “पूर्व्यं पुरातनं सन्तं “वाजसातये संग्रामाय “हवन्ते आह्वयन्ते ॥

अ॒स्माक॑मिंद्र दु॒ष्टरं॑ पुरो॒यावा॑नमा॒जिषु॑ ।

स॒यावा॑नं॒ धनें॑धने वाज॒यंत॑मवा॒ रथं॑ ॥७

अ॒स्माक॑म् । इ॒न्द्र॒ । दु॒स्तर॑म् । पु॒रः॒ऽयावा॑नम् । आ॒जिषु॑ ।

स॒ऽयावा॑नम् । धने॑ऽधने । वा॒ज॒ऽयन्त॑म् । अ॒व॒ । रथ॑म् ॥७

अस्माकम् । इन्द्र । दुस्तरम् । पुरःऽयावानम् । आजिषु ।

सऽयावानम् । धनेऽधने । वाजऽयन्तम् । अव । रथम् ॥७

हे “इन्द्र “अस्माकं “रथं रंहणस्वभावं वा पुत्रम् “अव रक्ष । कीदृशं रथम् । “दुष्टरं दुःखेन तरणीयम् "आजिषु संग्रामेषु “पुरोयावानं पुरतो मिश्रयितारं “सयावानम् अनुचरैः सह गन्तारं “धनेधने सर्वेषु धनेषु "वाजयन्तं संग्रामं धनं वेच्छन्तम् ॥

अ॒स्माक॑मि॒न्द्रेहि॑ नो॒ रथ॑मवा॒ पुरं॑ध्या ।

व॒यं श॑विष्ठ वार्यं॑ दि॒वि श्रवो॑ दधीमहि दि॒वि स्तोमं॑ मनामहे ॥८

अ॒स्माक॑म् । इ॒न्द्र॒ । आ । इ॒हि॒ । नः॒ । रथ॑म् । अ॒व॒ । पुर॑म्ऽध्या ।

व॒यम् । श॒वि॒ष्ठ॒ । वार्य॑म् । दि॒वि । श्रवः॑ । द॒धी॒म॒हि॒ । दि॒वि । स्तोम॑म् । म॒ना॒म॒हे॒ ॥८

अस्माकम् । इन्द्र । आ । इहि । नः । रथम् । अव । पुरम्ऽध्या ।

वयम् । शविष्ठ । वार्यम् । दिवि । श्रवः । दधीमहि । दिवि । स्तोमम् । मनामहे ॥८

हे “इन्द्र “अस्माकम् अस्मदीय एव सन् “एहि आगच्छ । आगत्य च “पुरंध्या शोभनबुद्ध्या “नः अस्माकं “रथम् “अव रक्ष । “वयं च हे “शविष्ठ अतिशयेन बलवन् त्वदनुग्रहात् "वार्यं वरणीयं “श्रवः अन्नं कीर्तिं वा “दिवि द्योतमाने त्वयि “दधीमहि स्थापयामः । तथा “दिवि त्वयि “स्तोमं स्तोत्रं “मनामहे करवामहे इत्यर्थः ॥ ॥ ६ ॥

# ऋग्वेदः सूक्तं ५.३६



दे. इन्द्रः। त्रिष्टुप्, ३ जगती।

स आ गमदिन्द्रो यो वसूनां चिकेतद्दातुं दामनो रयीणाम् ।
धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुम् ॥१॥
आ ते हनू हरिवः शूर शिप्रे रुहत्सोमो न पर्वतस्य पृष्ठे ।
अनु त्वा राजन्नर्वतो न हिन्वन्गीर्भिर्मदेम पुरुहूत विश्वे ॥२॥
चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे अमतेरिदद्रिवः ।
रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन्पुरूवसुः ॥३॥
एष ग्रावेव जरिता त इन्द्रेयर्ति वाचं बृहदाशुषाणः ।
प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥४॥
वृषा त्वा वृषणं वर्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्याम् ।
स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन्भरे धाः ॥५॥

यो रोहितौ वाजिनौ वाजिनीवान्त्रिभिः शतैः सचमानावदिष्ट ।

यूने समस्मै क्षितयो नमन्तां श्रुतरथाय मरुतो दुवोया ॥६॥

**सायणभाष्यम्**

'स आ गमत्' इति षड्चं चतुर्थं सूक्तम् । आङ्गिरसः प्रभूवसुर्ऋषिः । तृतीया जगती शिष्टा अनुक्तत्वात् त्रिष्टुभः । इन्द्रो देवता । अनुक्रान्तं च -- स आ गमत् षट् तृतीया जगती' इति ॥ विनियोगो लैङ्गिकः ॥

स आ ग॑म॒दिंद्रो॒ यो वसू॑ना॒ं चिकें॑त॒द्दातु॒ं दाम॑नो रयी॒णां ।

ध॒न्व॒च॒रो न वंस॑गस्तृषा॒णश्च॑कमा॒नः पिंबतु दु॒ग्धम॒ंशुं ॥१

सः । आ । ग॒म॒त् । इन्द्रः॑ । यः । वसू॑नाम् । चिकें॑तत् । दातु॑म् । दाम॑नः । र॒यी॒णाम् ।

ध॒न्व॒ऽच॒रः । न । वंस॑गः । तृ॒षा॒णः । च॒क॒मा॒नः । पि॒ब॒तु॒ । दु॒ग्धम् । अ॒ंशुम् ॥१

सः । आ । गमत् । इन्द्रः । यः । वसूनाम् । चिकेतत् । दातुम् । दामनः । रयीणाम् ।

धन्वऽचरः । न । वंसगः । तृषाणः । चकमानः । पिबतु । दुग्धम् । अंशुम् ॥१

“सः “इन्द्रः अस्मद्यज्ञं प्रति “आ “गमत् आगच्छतु । “यः देवः वसूनां धनानाम् ॥ कर्मणि षष्ठी ॥ वसूनि धनानि “चिकेतत् जानाति प्रदातुम् । स कीदृशः । “दामनः दाता दानमना वा “रयीणां धनानाम् । गमने दृष्टान्तः । “धन्वचरो “न धनुषा सह संचरन् धानुष्क इव “वंसगः वननीयगमनः “तृषाणः अत्यन्तं तृषितः “चकमानः कामयमानश्च सन् “दुग्धम् अभिषुतम् “अंशुं सोमं “पिबतु ॥

आ ते॒ हनू॑ हरिवः शूर॒ शिप्रे॑ रुह॒त्सोमो॒ न पर्व॑तस्य पृ॒ष्ठे ।

अनु॑ त्वा राज॒न्नर्व॑तो॒ न हि॒न्वन् गी॒र्भिर्म॑देम पुरुहूत॒ विश्वे॑ ॥२

आ । ते॒ । हनू॒ इति॑ । ह॒रि॒ऽव॒ः । शू॒र॒ । शिप्रे॒ इति॑ । रुह॑त् । सोमः॑ । न । पर्व॑तस्य । पृ॒ष्ठे ।

अनु॑ । त्वा॒ । रा॒ज॒न् । अर्व॑तः । न । हि॒न्वन् । गी॒ःऽभिः । म॒दे॒म॒ । पु॒रु॒ऽहू॒त॒ । विश्वे॑ ॥२

आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् । सोमः । न । पर्वतस्य । पृष्ठे ।

अनु । त्वा । राजन् । अर्वतः । न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥२

हे इन्द्र हे "हरिवः हरिभ्यां तद्वन् "शूर "ते तव "हनू हननसाधने । यद्यप्ययं शिप्रावचनः तथापि पुनः शिप्राभिधानात् गौणोऽवगन्तव्यः । उक्तरूपे संहते वा "शिप्रे "आ "रुहत् आरोहतु प्राप्नोतु "सोमः अस्मद्दत्तः । "पर्वतस्य "पृष्ठे "न रुहत् नारोहति । तत्र न तिष्ठतीत्यर्थः । यद्वा । नशब्दः पुरस्तात्प्रयुक्तोऽप्यत्रोपमार्थः । पर्वतस्य पृष्ठे उपरिप्रदेशे सोमो न । तत्र यथा विस्रम्भेण प्रसरति तद्वत् । हे "राजन् राजमानेन्द्र "त्वा त्वाम् "अनु त्वया सह ॥ तृतीयार्थे ' इत्यनोः कर्मप्रवचनीयत्वम् ॥ "विश्वे वयम् "अर्वतो "न अश्वानिव तृणादिभिः "गीर्भिः स्तुतिभिः "हिन्वन् हिन्वन्तः त्वां प्रीणयन्तः सन्तः "मदेम हृष्येम । हे "पुरुहूत बहुप्रकारं बहुभिर्वाहूतेन्द्र ।।

च॒क्रं न वृ॒त्तं पु॑रुहूत वेपते॒ मनो॑ भि॒या मे॒ अम॑ते॒रिद॑द्रिवः ।

रथा॒दधि॑ त्वा जरि॒ता स॑दावृध कु॒विन्नु स्तो॑षन्मघवन्पुरू॒वसुः॑ ॥३

च॒क्रम् । न । वृ॒त्तम् । पु॒रु॒ऽहू॒त॒ । वे॒प॒ते॒ । मनः॑ । भि॒या । मे॒ । अम॑तेः । इत् । अ॒द्रि॒ऽव॒ः ।

रथा॑त् । अधि॑ । त्वा॒ । ज॒रि॒ता । स॒दा॒ऽवृ॒धृ॒ । कु॒वित् । नु । स्तो॒ष॒म् । म॒घ॒ऽव॒न् । पु॒रु॒ऽवसुः॑ ॥३

चक्रम् । न । वृत्तम् । पुरुऽहूत । वेपते । मनः । भिया । मे । अमतेः । इत् । अद्रिऽवः ।

रथात् । अधि । त्वा । जरिता । सदाऽवृध । कुवित् । नु । स्तोषम् । मघऽवन् । पुरुऽवसुः ॥३

हे "पुरुहूत बहुभिराहूत हे "अद्रिवः वज्रवन्निन्द्र "मे "मनः "अमतेरित् दारिद्र्यादस्तोतुर्वा सकाशात् "भिया भीत्या "वेपते कम्पते । "वृत्तं "चक्रं "न भूमौ वर्तमानं चक्रमिव । यस्मादेवं तस्मात् "रथादधि उपरि स्थितं "त्वा त्वां हे "सदावृध सर्वदा वर्धमान हे "मघवन् इन्द्र "जरिता स्तोता "पुरूवसुः अहमृषिः "कुवित् बहु "नु क्षिप्रं "स्तोषत् स्तोष्यति स्तूयात् ॥ अत्र कुविच्छब्दयोगेऽपि आख्यातस्य बहुलग्रहणान्निघातः ॥

ए॒ष ग्रावे॑व जरि॒ता त॑ इं॒द्रेय॑र्ति॒ वाचं॑ बृ॒हदा॑शुषा॒णः ।

प्र स॒व्येन॑ मघव॒न्यंसि॑ रा॒यः प्र द॑क्षि॒णिद्ध॑रिवो॒ मा वि वे॑नः ॥४

ए॒षः । ग्रावा॑ऽइव । ज॒रि॒ता । ते॒ । इ॒न्द्र॒ । इय॑र्ति । वाच॑म् । बृ॒हत् । आ॒शु॒षा॒णः ।

प्र । स॒व्येन॑ । म॒घ॒ऽव॒न् । यंसि॑ । रा॒यः । प्र । द॒क्षि॒णित् । ह॒रि॒ऽव॒ः । मा । वि । वे॒न॒ः ॥४

एषः । ग्रावाऽइव । जरिता । ते । इन्द्र । इयर्ति । वाचम् । बृहत् । आशुषाणः ।

प्र । सव्येन । मघऽवन् । यंसि । रायः । प्र । दक्षिणित् । हरिऽवः । मा । वि । वेनः ॥४

“एषः “जरिता गरिता स्तोता "ग्रावेव अभिषवाश्मेव । स यथा रसं जनयति तद्वत् हे “इन्द्र “ते तुभ्यं “वाचं स्तुतिम् “इयर्ति प्रेरयतीत्यर्थः। “बृहत् महत् प्रभूतं फलम् “आशुषाणः आशु संभक्ता सन् हे “मघवन् 'सव्येन हस्तेन “रायः धनानि “प्र “यंसि प्रयच्छसि । “दक्षिणित् दक्षिणेनापि “प्र यंसीति शेषः । “मा “वि “वेनः विगतकामं मा कार्षीः ॥

वृषा॑ त्वा॒ वृष॑णं वर्धतु॒ द्यौर्वृषा॒ वृष॑भ्यां वहसे॒ हरि॑भ्यां ।

स नो॒ वृषा॒ वृष॑रथः सुशिप्र॒ वृष॑क्रतो॒ वृषा॑ वज्रि॒न्भरे॑ धाः ॥५

वृषा॑ । त्वा॒ । वृष॑णम् । व॒र्ध॒तु॒ । द्यौः । वृषा॑ । वृष॑ऽभ्याम् । व॒ह॒से॒ । हरि॑ऽभ्याम् ।

सः । न॒ः । वृषा॑ । वृष॑ऽरथः । सु॒ऽशि॒प्र॒ । वृष॑क्रतो॒ इति॒ वृष॑ऽक्रतो । वृषा॑ । व॒ज्रि॒न् । भरे॑ । धा॒ः ॥५

वृषा । त्वा । वृषणम् । वर्धतु । द्यौः । वृषा । वृषऽभ्याम् । वहसे । हरिऽभ्याम् ।

सः । नः । वृषा । वृषऽरथः । सुऽशिप्र । वृषक्रतो इति वृषऽक्रतो । वृषा । वज्रिन् । भरे । धाः ॥५

हे इन्द्र “त्वा त्वाम् “वृषा वर्षित्री “द्यौः द्योतयित्री स्तुतिः ॥ द्योततेर्दीव्यतेर्वा स्तुत्यर्थस्येदं रूपम् ।। “वृषणं कामानां वर्षकं त्वां “वर्धतु वर्धयतु । “वृषा त्वं “वृषभ्यां सेक्तृभ्यां “हरिभ्यां “वहसे यज्ञं प्रत्युह्यसे । हे “सुशिप्र शोभनहनो “वृषक्रतो वर्षणकर्मन् हे “वज्रिन् वज्रयुक्तेन्द्र “सः त्वं “वृषा “वृषरथः च सन् “नः अस्मान् “भरे संग्रामे भरणवति यज्ञे वा “धाः धारय ॥॥३॥

यो रोहि॑तौ वा॒जिनौ॑ वा॒जिनी॑वां॒त्रि॒भिः श॒तैः सच॑माना॒वदि॑ष्ट ।

यून॒े सम॑स्मै क्षि॒तयो॑ नमं॑तां श्रु॒तर॑थाय मरुतो दुवो॒या ॥६

यः । रोहि॑तौ । वा॒जिनौ॑ । वा॒जिनी॑ऽवान् । त्रि॒ऽभिः । श॒तैः । सच॑मानौ । अदि॑ष्ट ।

यूने॑ । सम् । अ॒स्मै॒ । क्षि॒तयः॑ । न॒म॒न्ता॒म् । श्रु॒तऽर॑थाय । म॒रु॒त॒ः । दु॒व॒ःऽया ॥६

यः । रोहितौ । वाजिनौ । वाजिनीऽवान् । त्रिऽभिः । शतैः । सचमानौ । अदिष्ट ।

यूने । सम् । अस्मै । क्षितयः । नमन्ताम् । श्रुतऽरथाय । मरुतः । दुवःऽया ॥६

इयं श्रुतरथस्य राज्ञो दानस्तुतिः । “यः राजा “वाजिनीवान् अन्नवान् श्रुतरथः “रोहितौ रोहितवर्णौ वाजिनौ वेजनवन्तावश्वौ “त्रिभिः “शतैः गवां धनानां वा उक्तसंख्याभिः “सचमानौ संगच्छमानौ "अदिष्ट । ददातेः दिशतेर्वा लुङीदं रूपम् ॥ "यूने सर्वत्र मिश्रयित्रे

उ॒त वां॑ क॒कु॒हो मृ॒गः पृक्षः॑ कृणोति वापु॒षो माध्वी॒ मम॑ श्रु॒तं॒ हवं॑ ॥४

सु॒ऽस्तुभः॑ । वा॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । रथे॑ । वाणी॑ची । आऽहि॑ता ।

उ॒त । वा॒म् । क॒कु॒हः । मृ॒गः । पृक्षः॑ । कृ॒णो॒ति॒ । वा॒पु॒षः । माध्वी॒ इति॑ । मम॑ । श्रु॒त॒म् । हव॑म् ॥४

सुऽस्तुभः । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथे । वाणीची । आऽहिता ।

उत । वाम् । ककुहः । मृगः । पृक्षः । कृणोति । वापुषः । माध्वी इति । मम । श्रुतम् । हवम् ॥४

हे “वृषण्वसू वर्षधनौ वर्षितारौ वा वसूनां हे अश्विनौ "सुष्टुभः सुस्तोतुर्मम “वाणीची वाग्रूपा स्तुतिः "वां युवयोः “रथे "आहिता स्थापिता । अस्माभिः कृतेत्यर्थः । “उत अपि च “वां युवाभ्यां “ककुहः महान् “मृगः मृगयिता “वापुषः वपुष्मान् यजमानः “पृक्षः अन्नं हविः “कृणोति करोति । तस्मात् “मम “हवं “श्रुतम् इति ॥

बो॒धिन्म॑नसा र॒थ्ये॑षि॒रा ह॑वन॒श्रुता॑ ।

विभि॒श्च्यवा॑नमश्विना॒ नि या॑थो॒ अद्व॑याविन॒ं माध्वी॒ मम॑ श्रु॒तं॒ हवं॑ ॥५

बो॒धित्ऽम॑नसा । र॒थ्या॑ । इ॒षि॒रा । ह॒व॒न॒ऽश्रुता॑ ।

विऽभिः॑ । च्यवा॑नम् । अ॒श्वि॒ना॒ । नि । या॒थः॒ । अद्व॑याविनम् । माध्वी॒ इति॑ । मम॑ । श्रु॒त॒म् । हव॑म् ॥५

बोधित्ऽमनसा । रथ्या । इषिरा । हवनऽश्रुता ।

विऽभिः । च्यवानम् । अश्विना । नि । याथः । अद्वयाविनम् । माध्वी इति । मम । श्रुतम् । हवम् ॥५

हे “अश्विना "बोधिन्मनसा बुध्यमानमनस्कौ “रथ्या रथस्वामिनौ "इषिरा शीघ्रगन्तारौ सर्वैर्गन्तव्यौ वा “हवनश्रुता हवनस्य स्तुतेः श्रोतारौ युवां “विभिः अश्वैः “च्यवानम् ऋषिम् “अद्वयाविनं मायारहितं “नि “याथः । यथा तमृषिं प्राप्तवन्तौ तद्वत् मां प्रति पथि नि याथः नितरामागच्छतम् ।' प्र च्यवानाज्जुजुरुषो वव्रिम् ' ( ऋ. सं. ५. ७४. ५ ) इति ह्युक्तम् ॥ ॥ १५ ॥

आ वां॑ नरा मनो॒युजोऽश्वा॑सः प्रुषि॒तप्स॑वः ।

वयो॑ वहंतु पी॒तये॑ स॒ह सु॒म्नेभि॑रश्विना॒ माध्वी॒ मम॑ श्रु॒तं॒ हवं॑ ॥६

आ । वा॒म् । न॒रा॒ । म॒नः॒ऽयुजः॑ । अश्वा॑सः । प्रु॒षि॒तऽप्स॑वः ।

वयः॑ । व॒ह॒न्तु॒ । पी॒तये॑ । स॒ह । सु॒म्नेभिः॑ । अ॒श्वि॒ना॒ । माध्वी॒ इति॑ । मम॑ । श्रु॒त॒म् । हव॑म् ॥६

आ । वाम् । नरा । मनःऽयुजः । अश्वासः । प्रुषितऽप्सवः ।

वयः । वहन्तु । पीतये । सह । सुम्नेभिः । अश्विना । माध्वी इति । मम । श्रुतम् । हवम् ॥६

हे नरा कर्मणां नेतारौ हे "अश्विना अश्विनौ “वां युवां “मनोयुजः मनोमात्रेण युज्यमानाः । सुशिक्षिता इत्यर्थः । “प्रुषितप्सवः विचित्ररूपाः “वयः शीघ्रगन्तारः “अश्वासः अश्वाः "आ “वहन्तु “पीतये सोमपानाय । “सुम्नेभिः “सह अस्मभ्यं देयैः सुखैस्तत्साधनैर्धनादिभिर्वा सह वहन्तु ॥

अश्विंनावेह गंच्छतं नासंत्या मा वि वेंनतं ।

तिरश्चिंदर्यया परिं वर्तिर्यांतमदाभ्या माध्वी ममं श्रुतं हवं ॥७

अश्विंनौ । आ । इह । गच्छतम् । नासंत्या । मा । वि । वेनतम् ।

तिरः । चित् । अर्यऽया । परिं । वर्तिः । यातम् । अदाभ्या । माध्वी इतिं । ममं । श्रुतम् । हवंम् ॥७

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।

तिरः । चित् । अर्यऽया । परि । वर्तिः । यातम् । अदाभ्या । माध्वी इति । मम । श्रुतम् । हवम् ॥७

हे "अश्विनौ "इह अस्मिन् यज्ञे “आ “गच्छतम् । हे "नासस्था “मा “वि “वेनतं विगतकामौ मा भवतम् । “ वेनतिः कान्तिकर्मा ' ( नि, १०. ३८)। हे “अदाभ्या अहिंस्यौ पूज्यौ “अर्यया अर्यौ स्वामिनौ युवाम् ॥ ‘सुपां सुलुक्' इत्यादिना सुपो याजादेशः ॥ “तिरश्चित् अन्तर्हितात् दूरदेशादपि युवां “वर्तिः अस्मद्यज्ञगृहं “परि “यातम् आगच्छतम् ॥

अस्मिन्यज्ञे अंदाभ्या जरितारं शुभस्पती ।

अवस्युमंश्विना युवं गृणंतमुपं भूषथो माध्वी ममं श्रुतं हवं ॥८

अस्मिन् । यज्ञे । अदाभ्या । जरितारंम् । शुभः । पती इतिं ।

अवस्युम् । अश्विना । युवम् । गृणन्तंम् । उपं । भूषथः । माध्वी इतिं । ममं । श्रुतम् । हवंम् ॥८

अस्मिन् । यज्ञे । अदाभ्या । जरितारम् । शुभः । पती इति ।

अवस्युम् । अश्विना । युवम् । गृणन्तम् । उप । भूषथः । माध्वी इति । मम । श्रुतम् । हवम् ॥८

हे “अदाभ्या अहिंस्यौ हे “शुभस्पती उदकस्य स्वामिनौ “अश्विना अश्विनौ “युवं युवाम् “अस्मिन् “यज्ञे “जरितारं स्तोतारम् “अवस्युं “गृणन्तं स्तुवन्तं माम् "उप "भूषथः उपप्राप्नुतम् ॥

अभूंदुषा रुशंत्पशुराग्निरंधाय्यृत्वियः ।

अयोंजि वां वृषण्वसू रथों दस्रावमंर्त्यो माध्वी ममं श्रुतं हवं ॥९

अभूंत् । उषाः । रुशंत्ऽपशुः । आ । अग्निः । अधायि । ऋत्वियः ।

अयोंजि । वाम् । वृषण्वसू इतिं वृषण्ऽवसू । रथः । दस्रौ । अमंर्त्यः । माध्वी इतिं । ममं । श्रुतम् । हवंम् ॥९

अभूत् । उषाः । रुशत्ऽपशुः । आ । अग्निः । अधायि । ऋत्वियः ।

अयोजि । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथः । दस्रौ । अमर्त्यः । माध्वी इति । मम । श्रुतम् । हवम् ॥९

“उषाः व्युष्टिः “अभूत् । अग्निः च “रुशत्पशुः दीप्तपशुमान् । प्रकाशितहविरित्यर्थः । अथवा पशवः किरणाः । रुशद्रश्मिः सन् “अधायि वेद्यामधीयत अग्निः अहवनीयः “ऋत्वियः ऋतौ काले भवः । हे “वृषण्वसू प्रदत्तधनौ हे “दस्रौ “वां युवयोः "अमर्त्यः अमरणधर्मा ध्रुवः “रथः “अयोजि । अश्वैर्युक्तो भवत्वित्यर्थः ॥ 'छन्दसि लुङ्लङ्लिटः' इत्यनेकेष्वर्थेषु लुङ् भवति । इह प्रार्थनायाम् । माध्वी इत्यादि गतम् ॥ ॥ १६ ॥

# ऋग्वेदः सूक्तं ५.७६



दे. अश्विनौ। त्रिष्टुप्।

---

आ भात्यग्निरुषसामनीकमुद्विप्राणां देववा वाचो अस्थुः ।

अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥१॥

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।

दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठा ॥२॥

उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।

दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥३॥

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।

आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥४॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥

**सायणभाष्यम्**

'आ भात्यग्निः' इति पञ्चर्चं चतुर्थं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभमाश्विनम् । अत्रानुक्रमणिका-- 'आ भाति पञ्चात्रिः' इति । प्रवर्ग्येऽभिष्टवार्थमिदं सूक्तम् । सूत्रितं च - आ भात्यग्निर्ग्रावाणेव ' ( आश्व. श्रौ. ४. ६ ) इति । प्रातरनुवाके आश्विने क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते । सूत्र्यते हि - 'आ भात्यग्निरिति सूक्ते' ( आश्व. श्रौ. ४. १५) इति । अप्तोर्यामे होतुरतिरिक्तोक्थ्ये इदं सूक्तम् । सूत्रितं च--' आ भात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

आ भा॑त्य॒ग्निरु॒षसा॒मनी॑कमु॒द्विप्रा॑णां देव॒या वाचो॑ अस्थुः ।

अ॒र्वाञ्चा॑ नू॒नं र॑थ्ये॒ह या॑तं पीपि॒वांस॑मश्विना घ॒र्ममच्छ॑ ॥१

आ । भा॒ति॒ । अ॒ग्निः । उ॒षसा॑म् । अनी॑कम् । उत् । विप्रा॑णाम् । दे॒व॒ऽयाः । वाचः॑ । अ॒स्थुः॒ ।

अ॒र्वाञ्चा॑ । नू॒नम् । र॒थ्या॒ । इ॒ह । या॒त॒म् । पी॒पि॒ऽवांस॑म् । अ॒श्वि॒ना॒ । घ॒र्मम् । अच्छ॑ ॥१

आ । भाति । अग्निः । उषसाम् । अनीकम् । उत् । विप्राणाम् । देवऽयाः । वाचः । अस्थुः ।

अर्वाञ्चा । नूनम् । रथ्या । इह । यातम् । पीपिऽवांसम् । अश्विना । घर्मम् । अच्छ ॥१

“उषसामनीकम् अनीकभूतः । अनीकं मुखम् । उषसि प्रबुध्यमान इत्यर्थः। तादृशः “अग्निः “आ “भाति दीप्यते । यद्वा । उषसां मुखम् आ भाति दीपयति । उषःकाले ह्यग्नयः प्रतिबोध्यन्ते । किंच “विप्राणां मेधाविनां स्तोतॄणां “देवयाः देवकामाः “वाचः स्तोत्राणि “उत् "अस्थुः उत्तिष्ठन्ति। यस्मादेवं तस्मात् हे “रथ्या रथस्वामिनावश्विनौ “अर्वाञ्चा अस्मदभिमुखाञ्चनौ “नूनम् अद्यास्मिन् यागदिने “इह आ “यातम् । कं प्रति । “पीपिवांसं स्वाङ्गैः परिवृढं "घर्मं प्रदीप्तं यज्ञम् । यद्वा । पीपिवांसमाप्यायितं वसतीवरीभिः क्षरद्रूपं सोमरसम् । अथवा घृतादिना पीपिवांसं धर्मं प्रवर्ग्यम् “अच्छ अभिलक्ष्य इह यातम् । प्रवर्ग्येऽस्य सूक्तस्य विनियोगः ॥

न सं॑स्कृ॒तं प्र मि॑मीतो॒ गमि॒ष्ठान्ति॑ नू॒नम॒श्विनोप॑स्तुते॒ह ।

दिवा॑भिपि॒त्वेऽव॒साग॑मिष्ठा॒ प्रत्यव॑र्तिं दा॒शुषे॒ शंभ॑विष्ठा ॥२

न । सं॒स्कृ॒तम् । प्र । मि॒मी॒तः॒ । गमि॑ष्ठा । अन्ति॑ । नू॒नम् । अ॒श्विना॑ । उप॑ऽस्तुता । इ॒ह ।

दिवा॑ । अ॒भि॒ऽपि॒त्वे । अव॑सा । आऽग॑मिष्ठा । प्रति॑ । अव॑र्तिम् । दा॒शुषे॑ । शम्ऽभ॑विष्ठा ॥२

न । संस्कृतम् । प्र । मिमीतः । गमिष्ठा । अन्ति । नूनम् । अश्विना । उपऽस्तुता । इह ।

दिवा । अभिऽपित्वे । अवसा । आऽगमिष्ठा । प्रति । अवर्तिम् । दाशुषे । शम्ऽभविष्ठा ॥२

अश्विनौ “संस्कृतं घर्मं “न “प्र “मिमीतः न हिंस्ताम् । किंतु “अन्ति अन्तिके घर्मसमीपे “नूनम् इदानीम् “इह यज्ञे “गमिष्ठा गन्तृतमौ” “अश्विना अश्विनौ “उपस्तुता उपस्तुतौ भवतः। “दिवाभिपित्वे दिवसस्याभिपतने प्रातःकाले “अवसा रक्षणेन सह “आगमिष्ठा आगन्तृतमौ । “अवर्तिं “प्रति द्वन्द्वभूतौ । वर्तिर्जीवनम् । तदभावोऽवर्तिः । तद्रहितमन्नं यथा भवति तथागन्तृतमौ । आगत्य च “दाशुषे हविर्दत्तवते यजमानाय “शंभविष्ठा सुखस्य भावयितारौ भवताम् ॥

उ॒ता यां॑तं संग॒वे प्रा॒तरह्नो॑ म॒ध्यंदि॑न॒ उदि॑ता॒ सूर्य॑स्य ।

दिवा॒ नक्त॒मवं॑सा॒ शंतं॑मेन॒ नेदानीं॑ पी॒तिर॒श्विना तं॑तान ॥३

उ॒त । आ । या॒त॒म् । स॒म्ऽग॒वे । प्रा॒तः । अह्नः॑ । म॒ध्यन्दिं॑ने । उत्ऽइं॑ता । सूर्यं॑स्य ।

दिवां॑ । नक्तं॑म् । अवं॑सा । शम्ऽतं॑मेन । न । इ॒दानीं॑म् । पी॒तिः । अ॒श्विनां॑ । आ । त॒ता॒न॒ ॥३

उत । आ । यातम् । सम्ऽगवे । प्रातः । अह्नः । मध्यन्दिने । उत्ऽइता । सूर्यस्य ।

दिवा । नक्तम् । अवसा । शम्ऽतमेन । न । इदानीम् । पीतिः । अश्विना । आ । ततान ॥३

अह्नो द्वेधा त्रेधा पञ्चधा पञ्चदशधा समाना: विभागाः सन्ति । इह पञ्चधा विभाग आत्तः । “उत अपि च "आ "यातम् आगच्छतम् । कदा "संगवे संगवकाले । संगच्छन्ते गावो दोहभूमिं यस्मिन् काले स संगवः । रात्र्यपरकाले हि गावो वने हिमतृणानि भक्षयित्वा पुनर्दोहाय संगवे प्रतिनिवर्तन्ते । तथा “प्रातः प्रातःकालेऽपि । तथा “मध्यंदिने “अह्नः मध्यकाले “सूर्यस्य “उदिता उदितौ अभ्युदये अत्यन्तप्रवृद्धसमये अपराह्णे इत्यर्थः । एतत् सायाह्नस्याप्युपलक्षणम् । न केवलम् उक्तेष्वेव कालेषु किं तर्हि "दिवा “नक्तं सर्वदा “शंतमेन सुखतमेन “अवसा रक्षणेन हविषा वा निमित्तेन आ यातम् । किमर्थमागम्यते पूर्वमेवान्यैर्देवैः स्वीकृतत्वात् नेत्याह । “इदानीम् अपि “पीतिः इतरदेवानां पानं “न “आ “ततान न तनोति “अश्विना अश्विनौ विहायेति शेषः ॥

इ॒दं हि वां॑ प्र॒दिवि॒ स्थान॒मोक॑ इ॒मे गृ॒हा अ॑श्विने॒दं दु॑रो॒णं ।

आ नों॑ दि॒वो बृं॑ह॒तः पर्वं॑ता॒दाद्भ्यो यां॑त॒मिष॒मूर्जं॒ वहं॑ता ॥४

इ॒दम् । हि । वा॒म् । प्र॒ऽदिविं॑ । स्थानं॑म् । ओकः॑ । इ॒मे । गृ॒हाः । अ॒श्वि॒ना॒ । इ॒दम् । दु॒रो॒णम् ।

आ । न॒ः । दि॒वः । बृ॒ह॒तः । पर्वं॑तात् । आ । अ॒त्ऽभ्यः । या॒त॒म् । इषं॑म् । ऊर्जं॑म् । वहं॑न्ता ॥४

इदम् । हि । वाम् । प्रऽदिवि । स्थानम् । ओकः । इमे । गृहाः । अश्विना । इदम् । दुरोणम् ।

आ । नः । दिवः । बृहतः । पर्वतात् । आ । अत्ऽभ्यः । यातम् । इषम् । ऊर्जम् । वहन्ता ॥४

हे “अश्विना “वां युवयोः “प्रदिवि पुराणम् “इदं “हि “ओकः निवासयोग्यं “स्थानम् उत्तरवेद्याख्यम् । अथ सौमिकवेद्यभिप्रायेणाह । “इमे “गृहाः प्राचीनवंशादयः । “इदं “दुरोणं देवयजनगृहम् । “नः अस्मदर्थं “दिवः द्युलोकात् “बृहतः पर्वतात् पर्ववतो मेघात् “अद्भ्यः अपां कारणादन्तरिक्षात् “आ “यातम् आगच्छतम् । किं तूष्णीम् । न । “इषमूर्जं च अन्नं बलं च । बलसाधनमन्नं सारभूतमित्यर्थः । तादृशं “वहन्ता वहन्तौ ॥

सम॒श्विनो॒रव॑सा॒ नूत॑नेन मयो॒भुवा॑ सु॒प्रणी॑ती गमेम ।

आ नो॑ र॒यिं व॑हत॒मोत वी॒राना विश्वा॑न्यमृता॒ सौभ॑गानि ॥५

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒यः॒ऽभुवा॑ । सु॒ऽप्रनी॑ती । ग॒मे॒म॒ ।

आ । न॒ः । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ । विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥५

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।

आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५

वयं “सं “गमेम संगच्छेम “अश्विनोः “नूतनेन “अवसा अनन्यकृतेन रक्षणेन “मयोभुवा सुखस्य भावयित्र्या “सुप्रणीती सुप्रणीत्या सुष्ठ्वागमनेन च । अपि वैते उभे अवसो विशेषणे । उक्तलक्षणेन सं गमेम । “नः अस्मभ्यं “रयिम् “आ “वहतम् । "उत “वीरान् पुत्रादीन् “आ वहतम् । हे “अमृता अमरणधर्माणौ “विश्वानि “सौभगानि सुभगत्वानि “आ वहतम् ॥ ॥ १७ ॥

# ऋग्वेदः सूक्तं ५.७७

ऋग्वेदः - मण्डल ५
← सूक्तं ५.७६ सूक्तं ५.७७ सूक्तं ५.७८ →
भौमोऽत्रिः

दे. अश्विनौ। त्रिष्टुप्

प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।

प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥१॥

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।

उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥२॥

हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।

मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥३॥

यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।

स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥४॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥

**सायणभाष्यम्**

‘प्रातर्यावाणा' इति पञ्चर्चं पञ्चमं सूक्तमात्रेयं त्रैष्टुभमाश्विनम् । ' प्रातर्यावाणा' इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः । अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थ्ये इदमेव शस्यम् । तथा च सूत्रितं -- प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिम् ' ( आश्व. श्रौ. ९. ११ ) इति ॥

प्रा॒त॒र्यावा॑णा प्रथ॒मा य॑जध्वं पु॒रा गृध्रा॒दर॑रुषः पिबातः ।

प्रा॒तर्हि य॒ज्ञम॒श्विना॑ द॒धाते॒ प्र शं॑संति क॒वयः॑ पूर्व॒भाजः॑ ॥१

प्रा॒त॒:ऽयावा॑ना । प्र॒थ॒मा । य॒ज॒ध्व॒म् । पु॒रा । गृध्रा॑त् । अर॑रुषः । पि॒बा॒तः॒ ।

प्रा॒तः । हि । य॒ज्ञम् । अ॒श्विना॑ । द॒धाते॒ इति॑ । प्र । श॒ंस॒न्ति॒ । क॒वयः॑ । पू॒र्व॒ऽभाजः॑ ॥१

प्रातःऽयावाना । प्रथमा । यजध्वम् । पुरा । गृध्रात् । अररुषः । पिबातः ।

प्रातः । हि । यज्ञम् । अश्विना । दधाते इति । प्र । शंसन्ति । कवयः । पूर्वऽभाजः ॥१

हे मदीया ऋत्विजः प्रातर्यावाणा प्रातरेव यज्ञं गन्तारौ “प्रथमा अत एवेतरेभ्यो देवेभ्यः पूर्वभाविनौ प्रकृष्टतमौ वा अश्विनौ “यजध्वम् । किमर्थं प्रथमयागनियोगः । उच्यते । “गृध्रात् अभिकाङ्क्षतः "अररुषः अदातू रक्षःप्रभृतेः “पुरा पूर्वं “पिबातः पिबताम् । अनागतौ कथं यष्टुं शक्यावित्यत आह । “अश्विना अश्विनौ “प्रातर्हि "यज्ञं “दधाते धारयतः संभजतः । “पूर्वभाज: पूर्वकालीनाः “कवयः अनूचाना ऋषयः प्रातरेवैतौ “प्र “शंसन्ति । ये वा अनूचानास्ते कवयः (ऐ. ब्रा. २. ३८) इति हि निगमः ॥

प्रा॒तर्य॑जध्वम॒श्विना॑ हिनोत॒ न सा॒यम॑स्ति देव॒या अजु॑ष्टं ।

उ॒तान्यो अ॒स्मद्य॑जते॒ वि चाव॒: पूर्व॑:पूर्वो॒ यज॑मानो॒ वनी॑यान् ॥२

प्रा॒तः । य॒ज॒ध्व॒म् । अ॒श्विना॑ । हि॒नो॒त॒ । न । सा॒यम् । अ॒स्ति॒ । दे॒व॒ऽयाः । अजु॑ष्टम् ।

उ॒त । अ॒न्यः । अ॒स्मत् । य॒ज॒ते॒ । वि । च॒ । आवः॑ । पूर्व॑ःऽपूर्वः । यज॑मानः । वनी॑यान् ॥२

प्रातः । यजध्वम् । अश्विना । हिनोत । न । सायम् । अस्ति । देवऽयाः । अजुष्टम् ।

उत । अन्यः । अस्मत् । यजते । वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयान् ॥२

हे मदीयाः पुरुषाः “अश्विना अश्विनौ “प्रातः प्रातरेव “यजध्वं पूजयध्वं स्तुध्वम् । “हिनोत प्रहिणुत हवींषि । “सायं सायंकाले हविः “देवयाः देवगामि “न “अस्ति न विद्यते । देवा न स्वीकुर्वन्तीत्यर्थः । “अजुष्टम् असेव्यं तद्भवति । पूर्वाह्णो वै देवानाम्' इति हि श्रुतिः । “उत “अस्मत् अस्मत्तः “अन्यः कोऽपि “यजते यजेत सोमेन “वि “चावः वितर्पयेच्च हविषा । अतोऽस्मास्वन्येषु च मध्ये “पूर्वः पूर्वो “यजमानः यः पूर्वः पूर्वो यष्टा भवति सः “वनीयान् देवानां संभजनीयः संभाव्यो भवति ॥

‘हिरण्यत्वक्' इत्येषाश्विने पशौ हविषो याज्या । ' हिरण्यत्वङ्मधुवर्णो घृतस्नुरभि क्रत्वेन्द्र भूरध ज्मन्' ( आश्व. श्रौ. ३. ८) इति हि सूत्रितम् ॥

हिर॑ण्यत्व॒ङ्मधु॑वर्णो घृ॒तस्नुः॒ पृक्षो॒ वह॒न्ना रथो॑ वर्तते वां ।

मनो॑जवा अश्विना॒ वात॑रंहा॒ येना॑तिया॒थो दु॑रि॒तानि॒ विश्वा॑ ॥३

हिर॑ण्यऽत्वक् । मधु॑ऽवर्णः । घृ॒तऽस्नुः॑ । पृक्षः॑ । वह॑न् । आ । रथः॑ । व॒र्त॒ते॒ । वा॒म् ।

मनः॑ऽजवाः । अ॒श्वि॒ना॒ । वात॑ऽरंहाः । येन॑ । अ॒ति॒ऽया॒थः । दुः॒ऽइ॒तानि॑ । विश्वा॑ ॥३

हिरण्यऽत्वक् । मधुऽवर्णः । घृतऽस्नुः । पृक्षः । वहन् । आ । रथः । वर्तते । वाम् ।

मनःऽजवाः । अश्विना । वातऽरंहाः । येन । अतिऽयाथः । दुःऽइतानि । विश्वा ॥३

"वां युवयोः “रथः “पृक्षः अन्नममृतं “वहन् “आ “वर्तते अस्मदभिमुखमागच्छति । कीदृशो रथः। “हिरण्यत्वक् हिरण्याच्छादितरूपः हिरण्यावृतः “मधुवर्णः मनोहरवर्णः “घृतस्नुः उदकस्य प्रस्नवनः “मनोजवाः मनोवेगः “वातरंहाः वातसदृशवेगः । हे “अश्विना “येन रथेन “विश्वा सर्वाणि "दुरितानि दुर्गमनान् मार्गान् "अतियाथः अतिक्रम्य गच्छथः ॥

यो भूयि॑ष्ठं॒ नास॑त्याभ्यां वि॒वेष॒ चनि॑ष्ठं पि॒त्वो रर॑ते विभा॒गे ।

स तो॒कम॑स्य पीपर॒च्छमी॑भि॒रनू॑र्ध्वभासः॒ सद॒मित्तु॑तुर्यात् ॥४

यः । भूयि॑ष्ठम् । नास॑त्याभ्याम् । वि॒वेष॑ । चनि॑ष्ठम् । पि॒त्वः । रर॑ते । वि॒ऽभा॒गे ।

सः । तो॒कम् । अ॒स्य॒ । पी॒प॒र॒त् । शमी॑भिः । अनू॑र्ध्वऽभासः । सद॑म् । इत् । तु॒तु॒र्या॒त् ॥४

यः । भूयिष्ठम् । नासत्याभ्याम् । विवेष । चनिष्ठम् । पित्वः । ररते । विऽभागे ।

सः । तोकम् । अस्य । पीपरत् । शमीभिः । अनूर्ध्वऽभासः । सदम् । इत् । तुतुर्यात् ॥४

“यः यजमानः "विभागे हविर्विभागवति' यागे “नासत्याभ्याम् अश्विभ्यां "भूयिष्ठं “चनिष्ठम् । ‘चन इत्यन्ननाम ' (निरु. ६. १६ )। बह्वन्नं कर्म “विवेष करोति । “पित्वः ॥ कर्मणि षष्ठी ॥ अन्नं च “ररते ददाति “सः यजमानः “अस्य आत्मन एव “तोकं पुत्रं “पीपरत् पालयेत् “शमीभिः कर्मभिः । “अनूर्ध्वभासः अनुन्नततेजस्कान् । यद्वा । ऊर्ध्वभासोऽग्नयः । अग्निरहितानयष्टृन “सदमित् सदैव "तुतुर्यात् हिंस्यात्

सम॒श्विनो॒रव॑सा॒ नूत॑नेन मयो॒भुवा॑ सु॒प्रणी॑ती गमेम ।

आ नो॑ र॒यिं व॑हत॒मोत वी॒राना विश्वा॑न्यमृता॒ सौभ॑गानि ॥५

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒यः॒ऽभुवा॑ । सु॒ऽप्रनी॑ती । ग॒मे॒म॒ ।

आ । न॒ः । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ । विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥५

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।

आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५

'समश्विनोः' इति पञ्चमी गता’॥

# ऋग्वेदः सूक्तं ५.७८



दे. अश्विनौ (५-९ गर्भस्राविण्युपनिषद्)। अनुष्टुप्, १-३ उष्णिक्, ४ त्रिष्टुप् ।

---

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।

हंसाविव पततमा सुताँ उप ॥१॥

अश्विना हरिणाविव गौराविवानु यवसम् ।

हंसाविव पततमा सुताँ उप ॥२॥

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये ।

हंसाविव पततमा सुताँ उप ॥३॥

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।

श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥४॥

वि जिहीष्व वनस्पते योनिः सूष्यन्त्या इव ।

श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥५॥

भीताय नाधमानाय ऋषये सप्तवध्रये ।

मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥६॥

यथा वातः पुष्करिणीं समिङ्गयति सर्वतः ।

एवा ते गर्भ एजतु निरैतु दशमास्यः ॥७॥

यथा वातो यथा वनं यथा समुद्र एजति ।

एवा त्वं दशमास्य सहावेहि जरायुणा ॥८॥

दश मासाञ्छशयानः कुमारो अधि मातरि ।

निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि ॥९॥

**सायणभाष्यम्**

‘अश्विनावेह' इति नवर्चं षष्ठं सूक्तम् । अत्रानुक्रमणिका- अश्विनौ नव सप्तवध्रिस्त्र्युष्णिगादि चतुर्थी त्रिष्टुप्पञ्चानुष्टुभः' इति । सप्तवध्रिर्नामात्रेय ऋषिः । आदितस्तिस्र उष्णिहश्चतुर्थी त्रिष्टुप् शिष्टाः पञ्चानुष्टुभः । प्रातरनुवाक आश्विने क्रतौ औष्णिहे छन्दसि आश्विने शस्त्रे चाद्यस्तृचो विनियुक्तः । सूत्रितं च - अश्विना वर्तिरस्मदाश्विनावेह गच्छतमिति तृचौ ' ( आश्व. श्रौ. ४, १५ ) इति । दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयमाश्विनस्तृचः । सूत्रितं च- अश्विनावेह गच्छतमा याह्यद्रिभिः सुतम् ' ( आश्व. श्रौ. ७. १० ) इति ॥

अश्वि॑ना॒वेह ग॑च्छतं॒ नास॑त्या॒ मा वि वे॑नतं ।

ह॒ंसावि॑व पतत॒मा सु॒ताँ उप॑ ॥१

अश्वि॑नौ । आ । इ॒ह । ग॒च्छ॒त॒म् । नास॑त्या । मा । वि । वे॒न॒त॒म् ।

ह॒ंसौऽइ॑व । प॒त॒त॒म् । आ । सु॒तान् । उप॑ ॥१

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।

हंसौऽइव । पततम् । आ । सुतान् । उप ॥१

हे अश्विनौ “इह अस्मिन् यागे “आ “गच्छतम् । हे “नासत्या “मा “वि "वेनतम् । वेनतिः कान्तिकर्मा । मा विकामौ भवतम् । निःस्पृहावकामौ वा न भवतमित्यर्थः । “हंसाविव तौ यथा निर्मलोदकमागच्छतस्तद्वत् “सुतान् अभिषुतान् सोमान् “उप “आ “पततम् उपागच्छतम् ॥

अश्विंना हरि॒णावि॑व गौ॒रावि॒वानु॒ यव॑सं ।

ह॒ंसावि॑व पतत॒मा सु॒ताँ उप॑ ॥२

अश्विंना । ह॒रि॒णौऽइ॑व । गौ॒रौऽइ॑व । अनुं । यव॑सम् ।

ह॒ंसौऽइ॑व । प॒त॒त॒म् । आ । सु॒तान् । उप॑ ॥२

अश्विना । हरिणौऽइव । गौरौऽइव । अनु । यवसम् ।

हंसौऽइव । पततम् । आ । सुतान् । उप ॥२

हे अश्विनौ "हरिणाविव "गौराविव गौरमृगाविव च । ती यथा "यवसं घासम् "अनु धावतः ताविव "हंसाविव च सोममागच्छतम् ॥

अश्विंना वाजिनीवसू जु॒षेथां॑ य॒ज्ञमि॒ष्टये॑ ।

ह॒ंसावि॑व पतत॒मा सु॒ताँ उप॑ ॥३

अश्विंना । वा॒जि॒नी॒व॒सू॒ इतिं वाजिनीऽवसू । जु॒षेथा॑म् । य॒ज्ञम् । इ॒ष्टये॑ ।

ह॒ंसौऽइ॑व । प॒त॒त॒म् । आ । सु॒तान् । उप॑ ॥३

अश्विना । वाजिनीवसू इति वाजिनीऽवसू । जुषेथाम् । यज्ञम् । इष्टये ।

हंसौऽइव । पततम् । आ । सुतान् । उप ॥३

हे "वाजिनीवसू अन्नार्थं वासयितारौ "अश्विना "यज्ञम् अस्मदीयम् "इष्टये अभीष्टायैषणाय वा "जुषेथा सेवेथाम् ॥

अत्रि॒र्यद्वा॑मव॒रोह॑न्नृ॒बीस॒मजो॑हवी॒न्नाध॑मानेव॒ योषा॑ ।

श्ये॒नस्य॑ चि॒ज्जव॑सा॒ नूत॑ने॒नाग॑च्छतमश्विना॒ शंत॑मेन ॥४

अत्रिः॑ । यत् । वा॒म् । अ॒व॒ऽरोह॑न् । ऋ॒बीस॑म् । अजो॑हवीत् । नाध॑मानाऽइव । योषा॑ ।

श्ये॒नस्य॑ । चि॒त् । जव॑सा । नूत॑नेन । आ । अ॒ग॒च्छ॒त॒म् । अ॒श्वि॒ना॒ । शम्ऽत॑मेन ॥४

अत्रिः । यत् । वाम् । अवऽरोहन् । ऋबीसम् । अजोहवीत् । नाधमानाऽइव । योषा ।

श्येनस्य । चित् । जवसा । नूतनेन । आ । अगच्छतम् । अश्विना । शम्ऽतमेन ॥४

“अत्रिः अस्मत्पिता "यत् यदा “वां युवाम् “अजोहवीत् अस्तौषीत् "नाधमाना याचमाना “योषा योषिदिव । सा यथा पतिं प्रीणयति तद्वत् कुर्वन् “ऋबीसं तुषाग्निमग्निकुण्डे क्षिप्तः सन् "अवरोहन विमुञ्चन् अजोहवीत् । “श्येनस्य चिज्जवसा श्येनस्य गरुत्मत इव वेगेन । चिदित्युपमार्थे । अथवा श्येनस्य जवसा वेगेन नूतनेन प्रथमोत्पनेन सततं गच्छतः श्येनस्य प्रथमजवेन “शंतमेन अस्माकं सुखतमेन च रथेन तं रक्षितुम् आगच्छतं हे “अश्विना ॥ ॥ १९ ॥

अत्र ब्रुवन्तीतिहासं सप्तवध्रेः पुराविदः । भ्रातृव्याः पेटिकायां तमृषिं प्रक्षिप्य यत्नतः ॥ मुद्रां कृत्वा गृहे स्वीये रक्षयित्वा न्यवेशयन् । न संगच्छेत भार्यां स्वां यथा रात्रौ तथा कृतम् ॥ प्रातःप्रातः समुद्घाट्य निर्मथिष्यन्ति तं मुनिम् । एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः ।। उपायं चिन्तयामास निर्गमस्य चिरं मुनिः । हृदि निश्चित्य नासत्यावस्तौषीद्धृष्टमानसः । तमश्विनौ समागत्य समुद्घाट्य च पेटिकाम् । उद्धृत्य तमृषिं शीघ्रं तावदृष्टौ बभूवतुः ॥ स ऋषिर्भार्यया सार्धं रमित्वाथ पुनर्भयात् । प्रातरेत्य पुनः पेटां प्रविश्य प्रागिव स्थितः । पेटानिवाससमये दृष्टवानृग्द्वयं तदा ।।

वि जिंहीष्व वनस्पते॒ योनिः॒ सूष्यं॑त्या इव ।

श्रु॒तं मे॑ अश्विना॒ हवं॑ स॒प्तव॑ध्रिं च मुंचतं ॥५

वि । जि॒ही॒ष्व॒ । व॒न॒स्प॒ते॒ । योनिः॑ । सूष्यं॑न्त्याःऽइव ।

श्रु॒तम् । मे॒ । अ॒श्वि॒ना॒ । हव॑म् । स॒प्तऽव॑ध्रिम् । च॒ । मु॒ञ्च॒त॒म् ॥५

वि । जिहीष्व । वनस्पते । योनिः । सूष्यन्त्याःऽइव ।

श्रुतम् । मे । अश्विना । हवम् । सप्तऽवध्रिम् । च । मुञ्चतम् ॥५

हे “वनस्पते वनस्पतिविकाररूपे पेटिके “वि “जिहीष्व विगच्छ । विवृता भव । “सूष्यन्त्याइव प्रसवोन्मुख्याः स्त्रियाः “योनिः इव भगो यथा विव्रियते तथा त्वमपि विवृता भव । तदर्थं हे “अश्विना अश्विनौ “मे “हवम् आह्वानं “श्रुतं शृणुतम् । श्रुत्वा च "सप्तवध्रिं “च मामृषिं “मुञ्चतं मोचयतम् ॥

भी॒ताय॒ नाध॑मानाय॒ ऋष॑ये स॒प्तव॑ध्रये ।

मा॒याभि॑रश्विना यु॒वं वृ॒क्षं सं च॒ वि चा॑चथः ॥६

भी॒ताय॑ । नाध॑मानाय । ऋष॑ये । स॒प्तऽव॑ध्रये ।

मा॒याभिः॑ । अ॒श्वि॒ना॒ । यु॒वम् । वृ॒क्षम् । सम् । च॒ । वि । च॒ । अ॒च॒थः॒ ॥६

भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये ।

मायाभिः । अश्विना । युवम् । वृक्षम् । सम् । च । वि । च । अचथः ॥६

“भीताय निर्गमात् बिभ्युषे “नाधमानाय विमोक्षं याचमानाय “सप्तवध्रये “ऋषये हे “अश्विना अश्विनौ “युवं युवां “मायाभिः “वृक्षं वृक्षविकारां पेटिकां “सं “चाचथः मम निर्गमार्थं संगच्छथः । "वि अचथः “च विभक्तं कुरुथः ॥

यथा॒ वातः॑ पुष्क॒रिणीं॑ समि॒ंगय॑ति स॒र्वतः॑ ।

ए॒वा ते॒ गर्भ॑ एजतु नि॒रैतु॒ दश॑मास्यः ॥७

यथा॑ । वातः॑ । पु॒ष्क॒रिणी॑म् । स॒म्ऽइ॒ङ्गय॑ति । स॒र्वतः॑ ।

ए॒व । ते॒ । गर्भः॑ । ए॒ज॒तु॒ । निः॒ऽऐतु॑ । दश॑ऽमास्यः ॥७

यथा । वातः । पुष्करिणीम् । सम्ऽइङ्गयति । सर्वतः ।

एव । ते । गर्भः । एजतु । निःऽऐतु । दशऽमास्यः ॥७

एतदादि ऋक्त्रयं गर्भस्राविण्युपनिषत् । एतदाद्यृक्त्रयेणासौ सप्तवध्रिः स्वयोषितः । गर्भिण्याः प्रसवायाशु स्तुतवानश्विनावृषिः । “यथा “वातः “पुष्करिणीं सरआदिकं “सर्वतः “समिङ्गयति सम्यक् चालयति “एव एवं तव "गर्भः “एजतु कम्पताम्' इतस्ततः संचरतु । “दशमास्यः दश मासान् गर्भे स्थितः “निरैतु निर्गच्छतु ।।

यथा॒ वातो॒ यथा॒ वनं॒ यथा॑ समु॒द्र एज॑ति ।

ए॒वा त्वं द॑शमास्य स॒हावे॑हि ज॒रायु॑णा ॥८

यथा॑ । वातः॑ । यथा॑ । वन॑म् । यथा॑ । स॒मु॒द्रः । एज॑ति ।

ए॒व । त्वम् । द॒श॒ऽमा॒स्य॒ । स॒ह । अव॑ । इ॒हि॒ । ज॒रायु॑णा ॥८

यथा । वातः । यथा । वनम् । यथा । समुद्रः । एजति ।

एव । त्वम् । दशऽमास्य । सह । अव । इहि । जरायुणा ॥८

वातो यथा कम्पमानो वनं कम्पयति स्वयम् । यथा समुद्रश्चलति चाल्यते वाथ वायुना ।। स्थित्वा दशैव मासांस्त्वं गर्भोल्बेन सुवेष्टितः । निर्गच्छ जठरान्मातुर्जरया सहितः पतेत् ॥

दश॒ मासाँछशया॒नः कुंमा॒रो अधिं मा॒तरिं ।

नि॒रैतुं जी॒वो अक्षंतो जी॒वो जीवंत्या॒ अधिं ॥९

दशं । मासा॑न् । श॒श॒या॒नः । कु॒मा॒रः । अधिं । मा॒तरिं ।

नि॒ःऽऐतुं । जी॒वः । अक्षंतः । जी॒वः । जीवंन्त्याः । अधिं ॥९

दश । मासान् । शशयानः । कुमारः । अधि । मातरि ।

निःऽऐतु । जीवः । अक्षतः । जीवः । जीवन्त्याः । अधि ॥९

दश मासानुषित्वासौ जननीजठरे सुखम् । निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥ ॥ २० ॥

# ऋग्वेदः सूक्तं ५.७९

ऋग्वेदः - मण्डल ५
← सूक्तं ५.७८ सूक्तं ५.७९ सूक्तं ५.८० →
सत्यश्रवा आत्रेयः।

दे. उषाः। पङ्क्तिः ।

महे नो अद्य बोधयोषो राये दिवित्मती ।

यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥१॥

या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।

सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥२॥

सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।

यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥३॥

अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।

मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृते ॥४॥

यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।

परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥५॥

ऐषु धा वीरवद्यश उषो मघोनि सूरिषु ।

ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते ॥६॥

तेभ्यो द्युम्नं बृहद्यश उषो मघोन्या वह ।

ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृते ॥७॥

उत नो गोमतीरिष आ वहा दुहितर्दिवः ।

साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥८॥

व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।

नेत्त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥९॥

एतावद्वेदुषस्त्वं भूयो वा दातुमर्हसि ।

या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृते ॥१०॥

**सायणभाष्यम्**

‘महे नो अद्य ' इति दशर्चं सप्तमं सूक्तमात्रेयस्य सत्यश्रवस आर्षं पाङ्त्दमुषस्यम् । अनुक्रम्यते च -- ‘ महे दश सत्यश्रवा उषस्यं तु पाङ्क्तम् ' इति । प्रातरनुवाके उषस्ये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्र्यते हि - महे नो अद्येति पाङ्क्तम् ' ( आश्व. श्रौ. ४. १४ ) इति ॥

म॒हे नो॑ अ॒द्य बो॑ध॒योषो॑ रा॒ये दि॒वित्म॑ती ।

यथा॑ चिन्नो॒ अबो॑धयः स॒त्यश्र॑वसि वा॒य्ये सुजा॑ते॒ अश्व॑सूनृते ॥१

म॒हे । न॒ः । अ॒द्य । बो॒ध॒य॒ । उषः॑ । रा॒ये । दि॒वित्म॑ती ।

यथा॑ । चि॒त् । न॒ः । अबो॑धयः । स॒त्यऽश्र॑वसि । वा॒य्ये । सुऽजा॑ते । अश्व॑ऽसूनृते ॥१

महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती ।

यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥१

“अद्य अस्मिन् यागदिने हे “उषः उषोदेवि “दिवित्मती दीप्तिमती त्वं “नः अस्मान् "महे महते “राये धनप्राप्तये “बोधय प्रज्ञापय । प्रकाशयेत्यर्थः । सति प्रकाशे क्रतुद्वारा दृव्यस्योपार्जयितुं शक्यत्वात् । “यथा “चित् यथैव पूर्वं “नः अस्मान् “अबोधयः अतीतेषु दिवसेषु यथा बोधितवती तद्वदद्यापि इत्यर्थः । हे “सुजाते शोभनप्रादुर्भूते “अश्वसूनृते । अश्वार्था प्रियसस्यात्मिका स्तुतिवाक् यस्याः सा । हे तादृशि देवि “वाय्ये वय्यपुत्रे “सत्यश्रवसि मय्यनुगृहाणेत्यर्थः ॥

या सु॑नी॒थे शौ॑चद्र॒थे व्यौच्छो॑ दुहितर्दिवः ।

सा व्यु॑च्छ॒ सही॑यसि स॒त्यश्र॑वसि वा॒य्ये सुजा॑ते॒ अश्व॑सूनृते ॥२

या । सु॒ऽनी॒थे । शौ॒च॒त्ऽर॒थे । वि । औच्छः॑ । दु॒हि॒त॒: । दि॒व॒: ।

सा । वि । उ॒च्छ॒ । सही॑यसि । स॒त्यऽश्र॑वसि । वा॒य्ये । सुऽजा॑ते । अश्व॑ऽसूनृते ॥२

या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः ।

सा । वि । उच्छ । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥२

हे “दिवः “दुहितः दिवः सूर्यस्य पुत्र्युषः "या त्वं “सुनीथे एतन्नामके “शौचद्रथे शुचद्रथस्थापत्ये पूर्वं “व्यौच्छः व्यवासयस्तमांसि “सा त्वं “सहीयसि अतिशयेन बलवति “वाय्ये वय्यपुत्रे "सत्यश्रवसि मयि “व्युच्छ तमो विवासय । उच्छी विवासे' । विवासो वर्जनम् । शिष्टमुक्तम् ॥

सा नो॑ अ॒द्याभ॒रद्व॑सु॒र्व्यु॑च्छा दुहितर्दिवः ।

यो व्यौच्छ॒ः सही॑यसि स॒त्यश्र॑वसि वा॒य्ये सुजा॑ते॒ अश्व॑सूनृते ॥३

सा । न॒: । अ॒द्य । आ॒भ॒रत्ऽव॑सुः । वि । उ॒च्छ॒ । दु॒हि॒त॒: । दि॒व॒: ।

यो इति॑ । वि । औच्छः॑ । सही॑यसि । स॒त्यऽश्र॑वसि । वा॒य्ये । सुऽजा॑ते । अश्व॑ऽसूनृते ॥३

सा । नः । अद्य । आभरत्ऽवसुः । वि । उच्छ । दुहितः । दिवः ।

यो इति । वि । औच्छः । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥३

हे “दुहितर्दिवः उषः “आभरद्वसुः आहृतधना “सा प्रसिद्धा त्वं “नः अस्माकम् “अद्य अस्मिन् दिने “व्युच्छ तमो विवासय । हे 'सहीयसि “यो या । उकारोऽनर्थकः । या त्वं पूर्वं “व्यौच्छः साद्यापीति ॥

अ॒भि ये त्वा॑ विभावरि॒ स्तोमै॑र्गृ॒णन्ति॒ वह्न॑यः ।

म॒घैर्म॑घोनि सु॒श्रियो॒ दाम॑न्वन्तः सुरा॒तय॒ः सुजा॑ते॒ अश्व॑सूनृते ॥४

अ॒भि । ये । त्वा॒ । वि॒भा॒ऽव॒रि॒ । स्तोमैः॑ । गृ॒णन्ति॑ । वह्न॑यः ।

म॒घैः । म॒घो॒नि॒ । सु॒ऽश्रियः॑ । दाम॑न्ऽवन्तः । सु॒ऽरा॒तयः॑ । सुऽजा॑ते । अश्व॑ऽसूनृते ॥४

अभि । ये । त्वा । विभाऽवरि । स्तोमैः । गृणन्ति । वह्नयः ।

मघैः । मघोनि । सुऽश्रियः । दामन्ऽवन्तः । सुऽरातयः । सुऽजाते । अश्वऽसूनृते ॥४

हे “विभावरि प्रकाशोपेते ॥ विभाशब्दात् ‘ छन्दसीवनिपौ' . इति वनिप् । भातेर्वा कर्तरि वनिप् ॥ उषः “त्वा त्वाम् “अभि प्रति “ये “वह्नयः वोढारः ऋत्विजः स्तोतारः “स्तोमैः स्तोत्रैः “गृणन्ति स्तुवन्ति ते स्तोतारः “मघैः हे “मघोनि धनैर्धनवति त्वदनुग्रहात् “सुश्रियः भवन्ति । सुष्ठ्वर्थिभिराश्रयणीया भवन्ति । “दामन्वन्तः दानवन्तो भवन्ति । “सुरातयः । रातिर्दानम् । सुदानाश्च भवन्ति ।।

यच्चि॒द्धि तें ग॒णा इ॒मे छ॒दय॑न्ति म॒घत्त॑ये ।

परिं चि॒द्वष्ट॑यो दधु॒र्दद॑तो॒ राधो॒ अह्र॑यं॒ सुजा॑ते॒ अश्व॑सूनृते ॥५

यत् । चि॒त् । हि । ते॒ । ग॒णाः । इ॒मे । छ॒दय॑न्ति । म॒घत्त॑ये ।

परिं । चि॒त् । वष्ट॑यः । द॒धुः॒ । दद॑तः । राधः॑ । अह्र॑यम् । सुऽजा॑ते । अश्व॑ऽसूनृते ॥५

यत् । चित् । हि । ते । गणाः । इमे । छदयन्ति । मघत्तये ।

परि । चित् । वष्टयः । दधुः । ददतः । राधः । अह्रयम् । सुऽजाते । अश्वऽसूनृते ॥५

हे उषः "यच्चिद्धि । हीति पूरणः । यत् ये केचन "ते तव स्वभूताः “इमे पुरतो वर्तमाना: "गणाः संघभूताः “मघत्तये धनदातये धनदानाय धनवत्त्वाय वा “छदयन्ति उपच्छन्दयन्ति ते सर्वेऽप्यस्मान् “परि “दधुः परितो धारयन्ति “वष्टयः अस्मानेव कामयमानाः । किं कुर्वन्तः । “अह्रयम् अह्रियमाणमक्षीणमलजावहं वा "राधः धनं हविर्लक्षणं “ददतः यजन्त इत्यर्थः । अर्थिभ्योऽक्षीणं ददतो वा । ये त्वां "हविर्ददतः स्तुवन्ति ते सर्वेऽप्यस्मदर्थमेव फलं धारयन्ति । स्तुवन्तीत्यर्थः । अथवा यच्चिद्धीत्यत्र यद्यपीति व्याख्येयम् । तस्मिन् पक्षे उत्तरवाक्ये तथापीत्यध्याहार्यम् । अवशिष्टं समानम् ॥ ॥ २१ ॥

ऐषु॑ धा वी॒रव॒द्यश॒ उषो॑ मघोनि सू॒रिषु॑ ।

ये नो॒ राधा॒स्यह्र॑या म॒घवा॑नो॒ अरा॑सत॒ सुजा॑ते॒ अश्व॑सूनृते ॥६

आ । ए॒षु॒ । धाः॒ । वी॒रऽव॑त् । यशः॑ । उषः॑ । म॒घो॒नि॒ । सू॒रिषु॑ ।

ये । नः॒ । राधाँ॑सि । अह्र॑या । म॒घऽवा॑नः । अरा॑सत । सुऽजा॑ते । अश्व॑ऽसूनृते ॥६

आ । एषु । धाः । वीरऽवत् । यशः । उषः । मघोनि । सूरिषु ।

ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत । सुऽजाते । अश्वऽसूनृते ॥६

हे "उषः देवि “मघोनि मघवति त्वम् “एषु “सूरिषु स्तोतृषु वा “वीरवद्यशः वीरैः पुत्रादिभिरुपेतमन्नं यशो वा “आ “धाः आधेहि । आदेहि आनय "ये मघवानः धनवन्तः सूरयः “नः अस्मभ्यं तव स्तोतृभ्यः "राधांसि धनानि “अह्रया अक्षीणानि "अरासत ददुः तेष्वित्यर्थः ॥

तेभ्यो॑ द्यु॒म्नं बृ॒हद्यश॒ उषो॑ मघो॒न्या व॑ह ।

ये नो॒ राधा॒स्यश्व्या॑ ग॒व्या भज॑न्त सू॒रय॒ः सुजा॑ते॒ अश्व॑सूनृते ॥७

तेभ्यः॑ । द्यु॒म्नम् । बृ॒हत् । यशः॑ । उषः॑ । म॒घो॒नि॒ । आ । व॒ह॒ ।

ये । नः॒ । राधाँ॑सि । अश्व्या॑ । ग॒व्या । भज॑न्त । सू॒रयः॑ । सुऽजा॑ते । अश्व॑ऽसूनृते ॥७

तेभ्यः । द्युम्नम् । बृहत् । यशः । उषः । मघोनि । आ । वह ।

ये । नः । राधांसि । अश्व्या । गव्या । भजन्त । सूरयः । सुऽजाते । अश्वऽसूनृते ॥७

हे “उषो “मघोनि त्वं “तेभ्यो "द्युम्नं द्योतमानं हिरण्यादिरूपं धनं “बृहद्यशः महदन्नं महती कीर्तिं वा तेभ्यो यजमानेभ्यः “आ "वह । "ये आढ्याः “नः अस्मभ्यं “राधांसि धनानि “अश्व्याः अश्वैर्युक्तानि “गव्या गोभिर्युक्तानि गोसमूहानश्वसमूहान् च "भजन्त भजेरन् ददुः “सूरयः दातारः॥

उ॒त नो॒ गोम॑ती॒रिष॒ आ व॑हा दुहितर्दिवः ।

सा॒कं सूर्य॑स्य र॒श्मिभि॒ः शु॒क्रैः शोच॑द्भिर॒र्चिभि॒ः सुजा॑ते॒ अश्व॑सूनृते ॥८

उ॒त । नः॒ । गोऽम॑तीः । इषः॑ । आ । व॒ह॒ । दु॒हि॒तः॒ । दि॒वः॒ ।

सा॒कम् । सूर्य॑स्य । र॒श्मिऽभिः॑ । शु॒क्रैः । शोच॑त्ऽभिः । अ॒र्चिऽभिः॑ । सुऽजा॑ते । अश्व॑ऽसूनृते ॥८

उत । नः । गोऽमतीः । इषः । आ । वह । दुहितः । दिवः ।

साकम् । सूर्यस्य । रश्मिऽभिः । शुक्रैः । शोचत्ऽभिः । अर्चिऽभिः । सुऽजाते । अश्वऽसूनृते ॥८

“उत अपि च “नः अस्मभ्यं “गोमतीः गोभिरुपेतानि “इषः अन्नानि “आ “वह आनय हे “दिवः दुहितः उषः । कदा । “सूर्यस्य “रश्मिभिः “साकं “शोचद्भिः दीपयद्भिः “शुक्रैः निर्मलैः “अर्चिभिः अग्नेस्तेजोभिश्च साकम् । सूर्योदयकालेऽग्नीन्धनकाले चेत्यर्थः ॥

व्यु॑च्छा दुहितर्दिवो॒ मा चि॒रं त॑नुथा॒ अपः॑ ।

नेत्त्वा॑ स्ते॒नं यथा॑ रि॒पुं तपा॑ति॒ सूरो॑ अ॒र्चिषा॒ सुजा॑ते॒ अश्व॑सूनृते ॥९

वि । उ॒च्छ॒ । दु॒हि॒तः॒ । दि॒वः॒ । मा । चि॒रम् । त॒नु॒थाः॒ । अपः॑ ।

न । इत् । त्वा॒ । स्ते॒नम् । यथा॑ । रि॒पुम् । तपा॑ति । सूरः॑ । अ॒र्चिषा॑ । सुऽजा॑ते । अश्व॑ऽसूनृते ॥९

वि । उच्छ । दुहितः । दिवः । मा । चिरम् । तनुथाः । अपः ।

न । इत् । त्वा । स्तेनम् । यथा । रिपुम् । तपाति । सूरः । अर्चिषा । सुऽजाते । अश्वऽसूनृते ॥९

हे दिवः “दुहितः उषः त्वं “व्युच्छ विभातं कुरु । “अपः अस्मदीयं कर्म प्रति “चिरं विलम्बं “मा “तनुथाः मा कृथाः । “त्वा त्वां “रिपुं “स्तेनं “यथा संतापयति राजादिः तद्वत “सूरः सूर्यः “अर्चिषा तेजसा “नेत् नैव "तपाति तप्यात् । शीघ्रं नोदत्वित्यर्थः ।।

ए॒ताव॒द्वेदु॑ष॒स्त्वं भूयो॑ वा॒ दातु॑मर्हसि ।

या स्तो॒तृभ्यो॑ विभावर्यु॒च्छन्ती॒ न प्र॒मीय॑से॒ सुजा॑ते॒ अश्व॑सूनृते ॥१०

ए॒ताव॑त् । वा॒ । इत् । उ॒षः॒ । त्वम् । भूयः॑ । वा॒ । दातु॑म् । अ॒र्ह॒सि॒ ।

या । स्तो॒तृऽभ्यः॑ । वि॒भा॒ऽव॒रि॒ । उ॒च्छन्ती॑ । न । प्र॒ऽमीय॑से । सुऽजा॑ते । अश्व॑ऽसूनृते ॥१०

एतावत् । वा । इत् । उषः । त्वम् । भूयः । वा । दातुम् । अर्हसि ।

या । स्तोतृऽभ्यः । विभाऽवरि । उच्छन्ती । न । प्रऽमीयसे । सुऽजाते । अश्वऽसूनृते ॥१०

हे “उषः त्वमस्मभ्यं “वा अथवा दित्सितं किम् “एतावत् एव । इच्छब्द एवकारार्थः । अस्मिन् सूक्ते प्रार्थितमेवेत्यर्थः । अथवा "भूयः “दातुमर्हसि । अप्रार्थितमपि । यद्दातव्यमस्ति तत्सर्वं देहि इत्यर्थः । हे “विभावरि उषः “या त्वं “स्तोतृभ्यः तेषां लौकिकवैदिकव्यवहारार्थं व्युच्छन्ती तमो विवासयन्ती “न “प्रमीयसे न हंसि । न क्रुध्यसीत्यर्थः । सा त्वं दातुमर्हसीति ॥ ' मीञ् हिंसायाम् ' इत्यस्मात् श्नास्थाने व्यत्ययेन श्यन् ॥ ॥ २२ ॥

# ऋग्वेदः सूक्तं ५.८०



दे. उषाः। त्रिष्टुप्।

---

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम् ।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥१॥
एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे ।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥२॥
एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।
पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥
एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥४॥
एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥५॥

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः ।

व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥६॥

**सायणभाष्यम्**

“द्युतद्यामानम्' इति षड़ृचमष्टमं सूक्तम् । अत्रानुक्रमणिका –'द्युतयामानं षट्' इति । सत्यश्रवा ऋषिः । अनुक्तत्वात् त्रिष्टुप् । 'उषस्यं तु ' इत्युक्तत्वात् उषाः देवता । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च -'द्युतद्यामानमुषो वाजेन ' ( आश्व.श्रौ.. ४. १४) इति ।।

द्युतद्या॑मानं बृहतीमृतेन॑ ऋतावरीमरुणप्सुं विभातीम् ।

देवीमुषसं स्व॑रावह॑न्तीं प्रति विप्रा॑सो मतिभिर्जरन्ते ॥१

द्युतत्ऽया॑मानम् । बृहतीम् । ऋतेन॑ । ऋतऽव॑रीम् । अरुणऽप्सुम् । विऽभातीम् ।

देवीम् । उषस॑म् । स्वः॑ । आऽवह॑न्तीम् । प्रति॑ । विप्रा॑सः । मतिऽभिः॑ । जरन्ते ॥१

द्युतत्ऽयामानम् । बृहतीम् । ऋतेन । ऋतऽवरीम् । अरुणऽप्सुम् । विऽभातीम् ।

देवीम् । उषसम् । स्वः । आऽवहन्तीम् । प्रति । विप्रासः । मतिऽभिः । जरन्ते ॥१

“द्युतद्यामानं दीप्तरथां “बृहतीं महतीम् “ऋतेन सत्येन यज्ञेन वा “ऋतावरीम् ऋतवतीम् “अरुणप्सुम् अरुणरूपां “विभातीं व्युच्छन्तीं “देवीं द्योतमानाम् "उषसं “स्वरावहन्तीं सूर्यं गच्छन्तीम् । एवं महानुभावाम् उषसं “विप्रासः मेधाविन ऋत्विजः “मतिभिः स्तुतिभिः “प्रति जरन्ते स्तुवन्ति ॥

एषा जनं॑ दर्शता बोधय॑न्ती सुगान्पथः कृ॑ण्वती यात्यग्रे॑ ।

बृहद्रथा बृ॑हती वि॑श्वमिन्वोषा ज्योति॑र्यच्छत्यग्रे अह्ना॑म् ॥२

एषा । जन॑म् । दर्शता । बोधय॑न्ती । सुऽगान् । पथः । कृण्वती । याति । अग्रे॑ ।

बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा । उषाः । ज्योतिः॑ । यच्छति । अग्रे॑ । अह्ना॑म् ॥२

एषा । जनम् । दर्शता । बोधयन्ती । सुऽगान् । पथः । कृण्वती । याति । अग्रे ।

बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा । उषाः । ज्योतिः । यच्छति । अग्रे । अह्नाम् ॥२

“दर्शता दर्शनीया “एषा उषाः "बोधयन्ती । कम् । “जनम् । प्रसुप्तमित्यर्थः । "पथः "सुगान् सुगमनान् “कृण्वती “अग्रे सूर्यस्य पुरस्तात् “याति गच्छति । कीदृश्युषाः “बृहद्रथा प्रभूतरथा “बृहती महती “विश्वमिन्वा विश्वं व्याप्नुवाना विश्वतर्पणा वा । ईदृशी “उषाः "अह्नाम् “अग्रे “ज्योतिः तेजः “यच्छति ॥

एषा गोभिर॑रु॒णेभि॒र्युजा॒नास्रे॑धन्ती र॒यिमप्रा॑यु चक्रे ।

प॒थो रद॑न्ती सुवि॒ताय॑ दे॒वी पु॑रुष्टु॒ता वि॒श्ववा॑रा॒ वि भा॑ति ॥३

ए॒षा । गोभिः॑ । अ॒रु॒णेभिः॑ । यु॒जा॒ना । अस्रे॑धन्ती । र॒यिम् । अप्र॑ऽआयु । च॒क्रे॒ ।

प॒थः । रद॑न्ती । सु॒वि॒ताय॑ । दे॒वी । पु॒रु॒ऽस्तु॒ता । वि॒श्वऽवा॑रा । वि । भा॒ति॒ ॥३

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधन्ती । रयिम् । अप्रऽआयु । चक्रे ।

पथः । रदन्ती । सुविताय । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥३

“एषा उषाः "अरुणेभिः अरुणवर्णैः “गोभिः बलीवर्दैः रथं "युजाना योजयन्ती “अस्रेधन्ती अशुष्यन्त्यक्षीणा वा । किम् । “रयिं धनम् "अप्रायु अप्रगन्तृ अविचलितं “चक्रे करोति । किं कुर्वती । “पथः मार्गान् “रदन्ती प्रकाशयन्ती । किमर्थम् । “सुविताय सुष्ठु गमनाय "देवी द्योतमाना “पुरुष्टुता बहुभिः स्तुता 'विश्ववारा सर्वैर्वरणीया “वि “भाति प्रकाशं करोति ।।

ए॒षा व्ये॑नी भवति द्वि॒बर्हा॑ आविष्कृण्वा॒ना त॒न्वं॑ पु॒रस्ता॑त् ।

ऋ॒तस्य॒ पन्था॒मन्वे॑ति सा॒धु प्र॑जान॒तीव॒ न दिशो॑ मिनाति ॥४

ए॒षा । विऽए॑नी । भ॒व॒ति॒ । द्वि॒ऽबर्हाः॑ । आ॒विः॒ऽकृ॒ण्वा॒ना । त॒न्व॑म् । पु॒रस्ता॑त् ।

ऋ॒तस्य॑ । पन्था॑म् । अनु॑ । ए॒ति॒ । सा॒धु । प्र॒जा॒न॒तीऽइ॑व । न । दिशः॑ । मि॒ना॒ति॒ ॥४

एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वम् । पुरस्तात् ।

ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥४

“एषा उषाः “व्येनी "भवति विशेषेण श्वेता भवति "द्विबर्हाः द्वयोः प्रथममध्यमयोः स्थानयोः परिवृढोषाः पश्चात् “तन्वं स्वीयां तनुम् “आविष्कृण्वाना प्रकटीकुर्वती । कुत्र । “पुरस्तात् पूर्वस्यां दिशि । किंच “ऋतस्य आदित्यस्य “पन्थां पन्थानं “साधु सम्यक् “अन्वेति । किंच “प्रजानतीव विश्वं प्रज्ञापयन्ती । इवेति संप्रत्यर्थे । “न “दिशो “मिनाति न हिनस्ति । प्रत्युत दिशः प्रकाशयति । अथवा प्रजानतीव अनुगन्तव्यमिति प्रकर्षेण अवगच्छन्ती च ऋतस्य पन्थामन्वेति ॥

एषा शुभ्रा न तन्वो॑ विदानोर्ध्वेवं स्नाती दृशये॑ नो अस्थात् ।

अप द्वेषो बाध॑माना तमाँस्युषा दिवो दु॑हिता ज्योतिषागा॑त् ॥५

एषा । शुभ्रा । न । तन्वः॑ । विदाना । ऊर्ध्वाऽइं॑व । स्नाती । दृशये॑ । नः । अस्थात् ।

अप॑ । द्वेषः॑ । बाध॑माना । तमाँ॑सि । उषाः । दिवः । दुहिता । ज्योति॑षा । आ । अगात् ॥५

एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् ।

अप । द्वेषः । बाधमाना । तमांसि । उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥५

“एषा उषाः “शुभ्रा “न शुभ्रवर्णा निर्मला स्वलंकृता योषिदिव “तन्वः अङ्गानि “विदाना प्रज्ञापयन्ती “स्नाती स्नानं कुर्वाणा “ऊर्ध्वेव उन्नतेव स्नानादुत्तिष्ठन्तीव "नः अस्मदर्थम् अस्माकं पुरतो वा “दृशये सर्वेषां दर्शनाय उत् "अस्थात् पूर्वस्यां दिशि उत्तिष्ठति। किं कुर्वती । “द्वेषः द्वेष्याणि “तमांसि “अप "बाधमाना “दिवो "दुहिता “उषाः "ज्योतिषा तेजसा सह 'आगात् आगच्छति ॥

एषा प्रं॑तीची दुं॑हिता दिवो नॄन्योषे॑व भद्रा नि रिं॑णीते अप्सं॑ः ।

व्यूर्ण्वती दाशुषे वार्या॑णि पुनर्ज्योति॑र्युवतिः पूर्वथा॑कः ॥६

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषा॑ऽइव । भद्रा । नि । रिणीते । अप्सः॑ ।

विऽऊर्ण्वती । दाशुषे॑ । वार्या॑णि । पुनः॑ । ज्योतिः॑ । युवतिः । पूर्वऽथा॑ । अकरित्यं॑कः ॥६

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा । नि । रिणीते । अप्सः ।

विऽऊर्ण्वती । दाशुषे । वार्याणि । पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥६

“एषा उषाः "प्रतीची अभिमुखा सती “दिवः "दुहिता "नॄन् सर्वान् प्राणिनः प्रति “भद्रा “योषेव कल्याणवेषा योषिदिव “अप्सः रूपं “नि “रिणीते प्रेरयति । किंच “दाशुषे हविर्दात्रे यजमानाय “वार्याणि वरणीयानि धनानि “व्यूर्ण्वती प्रयच्छन्ती “युवतिः नित्ययौवना सर्वत्र मिश्रयन्ती वा “पुनः अद्यापि “पूर्वथा पूर्वमिव “ज्योतिः तेजः “अकः करोति ॥ ॥ २३ ॥

# ऋग्वेदः सूक्तं ५.८१

ऋग्वेदः - मण्डल ५
← सूक्तं ५.८० सूक्तं ५.८१ सूक्तं ५.८२ →
श्यावाश्व आत्रेयः

दे. सविता। जगती ।

---

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥१॥
विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥२॥
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा ।
यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना ॥३॥
उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि ।
उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः ॥४॥
उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः ।

उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवित स्तोममानशे ॥५॥

**सायणभाष्यम्**

‘ युञ्जते मनः' इति पञ्चर्चं नवमं सूक्तम् । अत्रेयमनुक्रमणिका – ' युञ्जते पञ्च श्यावाश्वः सावित्रं तु जागतम् ' इति । श्यावाश्वो नामात्रेय ऋषिः । जगती छन्दः । सविता देवता । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम् । सूत्रितं च --' युञ्जते मन इहेह व इति चतस्रः ' ( आश्व. श्रौ. ७. ५) इति । आद्या ग्रावस्तोत्रेऽपि । सूत्रितं च - ‘ युञ्जते मन उत युञ्जते धिय आ तू न इन्द्र क्षुमन्तम् ' ( आश्व. श्रौ. ५. १२ ) इति ॥

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चित॑ः ।

वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः ॥१

यु॒ञ्जते॑ । मन॑ः । उ॒त । यु॒ञ्ज॒ते॒ । धिय॑ः । विप्रा॑ः । विप्र॑स्य । बृ॒ह॒तः । वि॒प॒ऽचित॑ः ।

वि । होत्रा॑ः । द॒धे॒ । व॒यु॒न॒ऽवित् । एक॑ः । इत् । म॒ही । दे॒वस्य॑ । स॒वि॒तुः । परि॑ऽस्तुतिः ॥१

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपःऽचितः ।

वि । होत्राः । दधे । वयुनऽवित् । एकः । इत् । मही । देवस्य । सवितुः । परिऽस्तुतिः ॥१

“विप्राः मेधाविन ऋत्विग्यजमानाः “मनः स्वीयं सर्वेषु कर्मसु "युञ्जते योजयन्ति । सवित्रनुग्रहाय संकल्पं कुर्वन्तीत्यर्थः । "उत अपि च "धियः कर्माण्यपि "युञ्जते प्राप्नुवन्ति । कस्यानुज्ञयेत्युच्यते । “विप्रस्य मेधाविनः "बृहतः महतः "विपश्चितः स्तुत्यस्य ज्ञानवतो वा सवितुः अनुज्ञयेति ।' सविता वै प्रसवानामीशे' (ऐ. ब्रा. ७. १६ ) इति हि श्रुतिः । स एव सविता "होत्राः सप्तहोत्रकाणामुचिताः क्रियाः “वयुनावित् । वयुनमिति प्रज्ञानाम । तत्तदनुष्ठानविषयप्रज्ञावेत्ता "एक "इत् एक एव “वि “दधे करोति । पृथक्पृथगवधारयति । किंच तस्य “सवितुः “देवस्य परिष्टुतिः स्तुतिः “मही महती अतिप्रभूता । स्तुत्यगोचरेत्यर्थः ॥

हविर्धानप्रवर्तने रराट्यामवनद्धायां विश्वा रूपाणि ' इत्येषानुवचनीया । सूत्रितं च ‘ विश्वा रूपाणि प्रति मुञ्चते कविरिति व्यवस्तायाम् ' ( आश्व. श्रौ. ४. ९) इति ॥

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।

वि नाक॑मख्यत्सवि॒ता वरे॒ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥२

विश्वा॑ । रू॒पाणि॑ । प्रति॑ । मु॒ञ्च॒ते॒ । क॒विः । प्र । अ॒सा॒वी॒त् । भ॒द्रम् । द्वि॒ऽपदे॑ । चतुः॑ऽपदे ।

वि । नाक॑म् । अ॒ख्य॒त् । स॒वि॒ता । वरे॑ण्यः । अनु॑ । प्र॒ऽयान॑म् । उ॒षसः॑ । वि । रा॒ज॒ति॒ ॥२

विश्वा । रूपाणि । प्रति । मुञ्चते । कविः । प्र । असावीत् । भद्रम् । द्विऽपदे । चतुःऽपदे ।

वि । नाकम् । अख्यत् । सविता । वरेण्यः । अनु । प्रऽयानम् । उषसः । वि । राजति ॥२

“कविः मेधावी सविता “विश्वा सर्वाणि "रूपाणि आत्मनि “प्रति “मुञ्चते बध्नाति धारयति । किंच “भद्रं कल्याणं गमनादिविषयं “प्रासावीत् अनुजानाति । कस्मै । “द्विपदे मनुष्याय “चतुष्पदे गवाश्वादिकाय । किंच “सविता सर्वस्य प्रेरको देवः “वरेण्यः वरणीयः सन् “वि “अख्यत् ख्यापयति प्रकाशयति । किम् । “नाकम् । नास्मिन्नकं दुःखमस्तीति नाकः स्वर्गः । यजमानार्थं स्वर्गं प्रकाशयतीत्यर्थः । स देवः “उषसः “प्रयाणम् उदयम् “अनु “वि “राजति प्रकाशते । सवितुरुदयात् पूर्वं ह्युषा उदेति ॥

यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा ।

यः पार्थि॑वानि विम॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना ॥३

यस्य॑ । प्र॒ऽयान॑म् । अनु॑ । अ॒न्ये । इत् । य॒युः । दे॒वाः । दे॒वस्य॑ । म॒हि॒मान॑म् । ओज॑सा ।

यः । पार्थि॑वानि । वि॒ऽम॒मे । सः । एत॑शः । रजां॑सि । दे॒वः । स॒वि॒ता । म॒हि॒ऽत्व॒ना ॥३

यस्य । प्रऽयानम् । अनु । अन्ये । इत् । ययुः । देवाः । देवस्य । महिमानम् । ओजसा ।

यः । पार्थिवानि । विऽममे । सः । एतशः । रजांसि । देवः । सविता । महिऽत्वना ॥३

“अन्य “इत् "देवाः अन्येऽप्यग्न्यादयः “यस्य “देवस्य द्योतमानस्य सवितुः “प्रयाणमनु “ययुः गच्छन्ति प्राप्नुवन्ति । किम् । “महिमानं महत्त्वम् । सवितुरुदयाभाचे अग्निहोत्राद्यनिष्पत्तेस्तेषां हविःस्तुत्याद्यभावात् । “ओजसा बलेन च युक्ता भवन्ति । "यः “सविता “पार्थिवानि “रजासि पृथिव्यादिलोकान् "महित्वना स्वमहत्त्वेन "विममे परिच्छिनत्ति "सः “देवः "एतशः एतवर्णः शुभ्रः शोभमानः सन् । राजते इति शेषः । ‘ युवशा ताकृणोतन' ( ऋ. सं. १. १६१. ७ ) इत्यादिवत् एतश इत्यादिशकारोपजनश्छान्दसः ।।

उ॒त या॑सि सवित॒स्त्रीणि॑ रोच॒नोत सूर्य॑स्य र॒श्मिभि॑ः समु॑च्यसि ।

उ॒त रात्री॑मुभ॒यत॑ः परी॑यस उ॒त मि॒त्रो भ॑वसि देव॒ धर्म॑भिः ॥४

उ॒त । या॒सि॒ । स॒वि॒त॒रिति॑ । त्रीणि॑ । रो॒च॒ना । उ॒त । सूर्य॑स्य । र॒श्मिऽभिः॑ । सम् । उ॒च्य॒सि॒ ।

उ॒त । रात्री॑म् । उ॒भ॒यतः॑ । परि॑ । ई॒य॒से॒ । उ॒त । मि॒त्रः । भ॒व॒सि॒ । दे॒व॒ । धर्म॑ऽभिः ॥४

उत । यासि । सवितरिति । त्रीणि । रोचना । उत । सूर्यस्य । रश्मिऽभिः । सम् । उच्यसि ।

उत । रात्रीम् । उभयतः । परि । ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः ॥४

हे "सवितः देव "उत अपि च "त्रीणि “रोचना रोचमानान् द्युलोकान् "यासि गच्छसि । ‘ तिस्रो दिवः पृथिवीः ' (ऋ. सं. ४, ५३. ५) इत्युक्तम् । "उत अपि च "सूर्यस्य "रश्मिभिः “समुच्यसि संगच्छसि ॥ ‘उच समवाये' इत्यस्येदं रूपम् ॥ उदयात् पूर्वभावी सविता उदयास्तमयवर्ती सूर्य इति । "उत अपि च "रात्रीमुभयतः उभयपार्श्वे "परीयसे परिगच्छसि । “उत अपि च हे "देव सवितस्त्वं “धर्मभिः जगद्धारकैः कर्मभिः “मित्रो "भवसि मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा भवसि सर्वजगताम् ॥

उ॒तेशि॑षे प्रस॒वस्य॒ त्वमेक॒ इदु॒त पू॒षा भ॑वसि देव॒ याम॑भिः ।

उ॒तेदं विश्वं॒ भुव॑नं॒ वि रा॑जसि श्या॒वाश्व॑स्ते सवित॒ः स्तोम॑मानशे ॥५

उ॒त । ई॒शि॒षे॒ । प्र॒ऽस॒वस्य॑ । त्वम् । एकः॑ । इत् । उ॒त । पू॒षा । भ॒व॒सि॒ । दे॒व॒ । याम॑ऽभिः ।

उ॒त । इ॒दम् । विश्व॑म् । भुव॑नम् । वि । रा॒ज॒सि॒ । श्या॒वऽअ॑श्वः । ते॒ । स॒वि॒त॒रिति॑ । स्तोम॑म् । आ॒न॒शे॒ ॥५

उत । ईशिषे । प्रऽसवस्य । त्वम् । एकः । इत् । उत । पूषा । भवसि । देव । यामऽभिः ।

उत । इदम् । विश्वम् । भुवनम् । वि । राजसि । श्यावऽअश्वः । ते । सवितरिति । स्तोमम् । आनशे ॥५

हे सवितः “त्वमेक "इत् एक एव "प्रसवस्य सर्वकर्मानुज्ञाकरणस्य “ईशिषे समर्थो भवसि । ये लौकिकं गमनादिरूपं वैदिकमग्निहोत्रादिरूपं कर्मानुतिष्ठन्ते तेषां सर्वेषामनुज्ञातुमेक एव प्रभवसि । "उत अपि च "पूषा पोषकः "भवसि हे "देव "यामभिः गमनैः । "उत अपि च "इदं "विश्वं “भुवनं भूतजातं "वि "राजसि ईशिषे धारयितुम् । यस्मादेवं महानुभावस्तस्मात् हे "सवितः "ते तुभ्यं “श्यावाश्वः ऋषिः "स्तोमं स्तोत्रम् "आनशे व्याप्नोति करोति । इत्येवमात्मानं परोक्षतया निर्दिशन्नाह ॥ ॥ २४ ॥

**मण्डल ५**

# ऋग्वेदः सूक्तं ५.८२


श्यावाश्व आत्रेयः ।

दे. सविता। गायत्री, १ अनुष्टुप् ।

---

तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।

श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥१॥

अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् ।

न मिनन्ति स्वराज्यम् ॥२॥

स हि रत्नानि दाशुषे सुवाति सविता भगः ।

तं भागं चित्रमीमहे ॥३॥

अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।

परा दुष्वप्न्यं सुव ॥४॥

विश्वानि देव सवितर्दुरितानि परा सुव ।

यद्भद्रं तन्न आ सुव ॥५॥

अनागसो अदितये देवस्य सवितुः सवे ।

विश्वा वामानि धीमहि ॥६॥

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ।

सत्यसवं सवितारम् ॥७॥

य इमे उभे अहनी पुर एत्यप्रयुच्छन् ।

स्वाधीर्देवः सविता ॥८॥

य इमा विश्वा जातान्याश्रावयति श्लोकेन ।

प्र च सुवाति सविता ॥९॥

**सायणभाष्यम्**

' तत्सवितुः' इति नवर्चं दशमं सूक्तं श्यावाश्वस्यार्षम् । अत्रेयमनुक्रमणिका- तत्सवितुर्नव गायत्रमाद्यानुष्टुप्' इति । प्रथमानुष्टुप् शिष्टा गायत्र्यः । ' सावित्रं तु ' इत्युक्तत्वात् सावित्रम् । अग्निष्टोमे वैश्वदेवशस्त्रस्याद्यस्तृचः प्रतिपत् ‘ अद्या नो देव ' इत्यनुचरः । सूत्रितं च-- ‘ तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ ' ( आश्व.श्रौ. ५.१८) इति ॥

तत्स॑वि॒तुर्वृ॑णीमहे व॒यं दे॒वस्य॒ भोज॑नम् ।

श्रेष्ठं॑ सर्व॒धात॑मं॒ तुरं॒ भग॑स्य धीमहि ॥१

तत् । स॒वि॒तुः । वृ॒णी॒म॒हे॒ । व॒यम् । दे॒वस्य॑ । भोज॑नम् ।

श्रेष्ठ॑म् । स॒र्व॒ऽधात॑मम् । तुर॑म् । भग॑स्य । धी॒म॒हि॒ ॥१

तत् । सवितुः । वृणीमहे । वयम् । देवस्य । भोजनम् ।

श्रेष्ठम् । सर्वऽधातमम् । तुरम् । भगस्य । धीमहि ॥१

“तत् प्राप्यत्वेन प्रसिद्ध “भोजनं भोग्यं धनं “वयं स्तोतारः “वृणीमहे प्रार्थयामः । कस्य धनम्। 'सवितुः प्रेरकस्य "देवस्य स्वभूतम् । लब्ध्वा च “श्रेष्ठं प्रशस्यं "सर्वधातमं सर्वधातृतमम् । सर्वभोगप्रदमित्यर्थः । “तुरं शत्रूणां हिंसकम् । धनेन शत्रून् हन्तुं शक्यत्वात् ।

तादृशं धनं "भगस्य भजनीयस्य सवितुरनुग्रहात् “धीमहि धारयाम । उपभोगं करवामेत्यर्थः । अथवा धनं वृणीमहे अर्थित्वाच्च लभेमहीति ॥

अस्य॒ हि स्वय॑शस्तरं सवि॒तुः कच्च॒न प्रि॒यम् ।

न मि॒नन्ति॑ स्व॒राज्य॑म् ॥२

अस्य॑ । हि । स्वय॑शःऽतरम् । स॒वि॒तुः । कत् । च॒न । प्रि॒यम् ।

न । मि॒नन्ति॑ । स्व॒ऽराज्य॑म् ॥२

अस्य । हि । स्वयशःऽतरम् । सवितुः । कत् । चन । प्रियम् ।

न । मिनन्ति । स्वऽराज्यम् ॥२

“अस्य "सवितुः "स्वयशस्तरं स्वयमसाधारणं यशो यस्यातिशयेन भवति तत्तादृशं “प्रियं सर्वेषां प्रियभूतं "स्वराज्यं स्वयमेव राजमानत्वमैश्वर्यं "कच्चन केचिदप्यसुरादयः “न “मिनन्ति न हिंसन्ति ॥

स हि रत्ना॑नि दा॒शुषे॑ सु॒वाति॑ सवि॒ता भग॑ः ।

तं भा॒गं चि॒त्रमी॑महे ॥३

सः । हि । रत्ना॑नि । दा॒शुषे॑ । सु॒वाति॑ । स॒वि॒ता । भगः॑ ।

तम् । भा॒गम् । चि॒त्रम् । ई॒म॒हे॒ ॥३

सः । हि । रत्नानि । दाशुषे । सुवाति । सविता । भगः ।

तम् । भागम् । चित्रम् । ईमहे ॥३

“स “हि स खलु “सविता "भगः भजनीयो देवः “दाशुषे हविर्दात्रे मह्यं "रत्नानि रमणीयानि धनानि “सुवाति प्रेरयति प्रयच्छति । "तं देवं “भागं भजनीयं "चित्रं चायनीयं धनम् "ईमहे याचामहे ॥

‘ अद्या नः' इति चतुर्थीपञ्चमीभ्याममनोज्ञस्वप्नदर्शने प्रत्यृचं जुहुयात् । ‘ अद्या नो देव सवितरिति द्वाभ्याम् ' ( आश्व. गृ. ३. ६, ६) इति हि सूत्रितम् ॥

अ॒द्या नों देव सवितः प्र॒जाव॑त्सावी॒ः सौभ॑गम् ।

परा॑ दु॒ष्ष्वप्न्य॑ं सुव ॥४

अ॒द्य । न॒ः । दे॒व॒ । स॒वि॒त॒रिति॑ । प्र॒जाऽव॑त् । सा॒वी॒ः । सौभ॑गम् ।

परा॑ । दु॒ःऽस्वप्न्य॑म् । सु॒व॒ ॥४

अद्य । नः । देव । सवितरिति । प्रजाऽवत् । सावीः । सौभगम् ।

परा । दुःऽस्वप्न्यम् । सुव ॥४

हे "सवितः “देव "नः अस्मभ्यम् "अद्य अस्मिन् यागदिने “प्रजावत् पुत्राद्युपेतं "सौभगं धनं "सावीः प्रेरय । "दुःष्वप्न्यं दुःस्वप्नं दुःस्वप्नवद्दुःखकरं दारिद्र्यं "परा “सुव दूरे प्रेरय ॥

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव ।

यद्भ॒द्रं तन्न॒ आ सु॑व ॥५

विश्वा॑नि । दे॒व॒ । स॒वि॒त॒ः । दु॒ःऽइ॒तानि॑ । परा॑ । सु॒व॒ ।

यत् । भ॒द्रम् । तत् । न॒ः । आ । सु॒व॒ ॥५

विश्वानि । देव । सवितः । दुःऽइतानि । परा । सुव ।

यत् । भद्रम् । तत् । नः । आ । सुव ॥५

हे सवितः “देव त्वं विश्वानि दुरितानि परा सुव । यद्भद्रं प्रजापशुगृहादिकं तत् “नः अस्मभ्यम् “ “सुव अस्मदभिमुखं प्रेरय। ‘प्रजा वै भद्रं पशवो भद्रं गृहं भद्रम्' इति हि श्रुतिः ॥ ॥ २५ ॥

अना॑गसो॒ अदि॑तये दे॒वस्य॑ सवि॒तुः स॒वे ।

विश्वा॑ वा॒मानि॑ धीमहि ॥६

अना॑गसः । अदि॑तये । दे॒वस्य॑ । स॒वि॒तुः । स॒वे ।

विश्वा॑ । वा॒मानि॑ । धी॒म॒हि॒ ॥६

अनागसः । अदितये । देवस्य । सवितुः । सवे ।

विश्वा । वामानि । धीमहि ॥६

वयमनुष्ठातारः "सवितुः प्रेरकस्य “देवस्य “सवे अनुज्ञायां सत्याम् "अदितये अखण्डनीयायै देव्यै भूम्यै "अनागसः स्याम अनपराधिनो भवेम । भूम्यां हि पापाः संभवन्ति । अपगतेष्वागःसु “विश्वा सर्वाणि "वामानि वननीयानि धनानि “धीमहि धारयाम ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि सावित्रस्य द्वादशकपालस्य ‘ आ विश्वदेवम् ' इत्यनुवाक्या । सूत्रितं च - ‘ आ विश्वदेवं सत्पतिं वाममद्य सवितः ' ( आश्व. श्रौ. २.१६ ) इति । प्रायणीये एषैव सवितुरनुवाक्या । सूत्रितं च - ‘ आ विश्वदेवं सत्पतिं य इमा विश्वा जातानि' (आश्व. श्रौ. ४. ३ ) इति । देवसुवां हविःषु एषैव सवितुरनुवाक्या । सूत्रितं च - आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तत् ' ( आश्व. श्रौ. ४. ११) इति ॥

आ वि॒श्वदे॑वं॒ सत्प॑तिं सू॒क्तैर॒द्या वृ॑णीमहे ।

स॒त्यस॑वं सवि॒तार॑म् ॥७

आ । वि॒श्वऽदे॑वम् । सत्ऽप॑तिम् । सु॒ऽउ॒क्तैः । अ॒द्य । वृ॒णी॒म॒हे॒ ।

स॒त्यऽस॑वम् । स॒वि॒तार॑म् ॥७

आ । विश्वऽदेवम् । सत्ऽपतिम् । सुऽउक्तैः । अद्य । वृणीमहे ।

सत्यऽसवम् । सवितारम् ॥७

"विश्वदेवम् । विश्वे देवा यस्य वशे भवन्ति तं तादृशम् । स हि सर्वात्मा, इन्द्रं मित्रं वरुणमग्निमाहुः' (ऋ. सं. १. १६४. ४६ ) इत्यादिश्रुतेः इतरेषां तद्विभूतित्वात् । "सत्पतिं सतामनुष्ठातॄणां पालकं "सत्यसवं सत्यानुज्ञं "सवितारं देवम् "अद्य अस्मिन् यागदिने "सूक्तैः “आ "वृणीमहे संभजामहे ॥

य इ॒मे उ॒भे अह॑नी पु॒र एत्यप्र॑युच्छन् ।

स्वा॒धीर्दे॒वः स॑वि॒ता ॥८

यः । इ॒मे इति॑ । उ॒भे इति॑ । अह॑नी॒ इति॑ । पु॒रः । एति॑ । अप्र॑ऽयुच्छन् ।

सु॒ऽआ॒धीः । दे॒वः । स॒वि॒ता ॥८

यः । इमे इति । उभे इति । अहनी इति । पुरः । एति । अप्रऽयुच्छन् ।

सुऽआधीः । देवः । सविता ॥८

"यः "सविता "देवः "स्वाधीः शोभनाध्यानः सुकर्मा वा सन् "इमे “अहनी रात्र्यहनी तयोः “पुरः पुरस्तात् "अप्रयुच्छन् अप्रमाद्यन् "एति गच्छति तम् आ वृणीमहे इति संबन्धः ॥

प्रायणीये ‘य इमा विश्वा' इति सवितुर्याज्या । सूत्रितं च - ‘ य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्यामनेहसम्' (आश्व. श्रौ. ४. ३) इति । अश्वमेधेऽश्वमुत्सृज्यानुसवनं सावित्रीष्टिः कार्या । तस्यामेषा माध्यंदिने सवनेऽनुवाक्या । सूत्रितं च - ‘ य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः ' ( आश्व. श्रौ. १०.६ ) इति ॥

य इ॒मा विश्वा॑ जा॒तान्या॑श्रा॒वय॑ति॒ श्लोके॑न ।

प्र च॑ सु॒वाति॑ सवि॒ता ॥९

यः । इ॒मा । विश्वा॑ । जा॒तानि॑ । आ॒ऽश्रा॒वय॑ति । श्लोके॑न ।

प्र । च॒ । सु॒वाति॑ । स॒वि॒ता ॥९

यः । इमा । विश्वा । जातानि । आऽश्रावयति । श्लोकेन ।

प्र । च । सुवाति । सविता ॥९

“यः देवः “इमा इमानि "विश्वा सर्वाणि “जातानि उत्पन्नान् प्राणिनः । जङ्गानित्यर्थः । तान् "श्लोकेन यशसा “आश्रावयति । सर्वेऽप्यस्य स्तुतिं शृण्वन्तीत्यर्थः । अथवा गर्जनशब्देन सर्वाणि इमान्युत्पन्नान्याश्रावयति वृष्ट्युन्मुखः सन् । किंच "सविता “प्र “सुवाति "च प्रेरयति तं वृणीमहे इति ॥ ॥ २६ ॥

विकिस्रोतः

# ऋग्वेदः सूक्तं ५.८३

| ऋग्वेदः - मण्डल ५ | | |
|---|---|---|
| ← सूक्तं ५.८२ | सूक्तं ५.८३ | सूक्तं ५.८४ → |
| | भौमोऽत्रिः | |

दे. पर्जन्यः। त्रिष्टुप्, २-४ जगती, ९ अनुष्टुप्।

---



Play media

*पर्जन्यः*

अच्छा वद तवसं गीर्भिराभि स्तुहि पर्जन्यं नमसा विवास ।

कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥१॥

वि वृक्षान्हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।

उतानागा ईषते वृष्ण्यावतो यत्पर्जन्य स्तनयन्हन्ति दुष्कृतः ॥२॥

रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ अह ।

दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं नभः ॥३॥

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।

इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥४॥

यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति ।

यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥५॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।

अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥६॥

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।

दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥७॥

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात् ।

घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥८॥

यत्पर्जन्य कनिक्रदत्स्तनयन्हंसि दुष्कृतः ।

प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ ।

अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥१०॥

**सायणभाष्यम्**

‘अच्छा वद' इति दशर्चमेकादशं सूक्तं भौमस्यात्रेरार्षम् । अत्रेयमनुक्रमणिका-- ‘अच्छ दशात्रिः पार्जन्यमुपाद्यास्तिस्रो जगत्य उपान्त्यानुष्टुप् ' इति । ‘यत्पर्जन्य' इत्येषा नवम्यनुष्टुप् ‘वि वृक्षान्' इत्याद्यास्तिस्रो जगत्यः शिष्टाः षट् त्रिष्टुभः । पर्जन्यो देवता ।

अनेन सूक्तेन प्रत्यृचं वा दिशः उपस्थेयाः । सूत्रितं च-'संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन वा ' (आश्व. श्रौ. २. १३) इति ॥

अच्छा॑ वद त॒वसं॑ गी॒र्भिरा॒भिः स्तु॒हि प॒र्जन्यं॒ नम॒सा वि॑वास ।

कनि॑क्रदद्वृष॒भो जी॒रदा॑नू॒ रेतो॑ दधा॒त्योष॑धीषु॒ गर्भ॑म् ॥१

अच्छ॑ । व॒द॒ । त॒वस॑म् । गी॒ःऽभिः । आ॒भिः । स्तु॒हि । प॒र्जन्य॑म् । नम॑सा । आ । वि॒वा॒स॒ ।

कनि॑क्रदत् । वृ॒ष॒भः । जी॒रऽदा॑नुः । रेतः॑ । द॒धा॒ति॒ । ओष॑धीषु । गर्भ॑म् ॥१

अच्छ । वद । तवसम् । गीःऽभिः । आभिः । स्तुहि । पर्जन्यम् । नमसा । आ । विवास ।

कनिक्रदत् । वृषभः । जीरऽदानुः । रेतः । दधाति । ओषधीषु । गर्भम् ॥ १ ॥

हे स्तोतः "तवसं बलवन्तं "पर्जन्यम् "अच्छ अभिप्राप्य "वद प्रार्थय । पर्जन्यशब्दो यास्केन बहुधा निरुक्तः -- पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानाम् ' ( निरु. १०. १० ) इति । "आभिः “गीर्भिः स्तुतिवाग्भिः "स्तुहि । "नमसा अन्नेन हविर्लक्षणेन "आ "विवास सर्वतः परिचर । यः पर्जन्यः "वृषभः अपां वर्षिता "जीरदानुः क्षिप्रदानः "कनिक्रदत् गर्जनशब्दं कुर्वन् “ओषधीषु "गर्भं गर्भस्थानीयं "रेतः उदकं "दधाति स्थापयति तं स्तुहि ॥

वि वृ॒क्षान्ह॑न्त्यु॒त ह॑न्ति र॒क्षसो॒ विश्वं॑ बिभाय॒ भुव॑नं म॒हाव॑धात् ।

उ॒ताना॑गा ईषते॒ वृष्ण्या॑वतो॒ यत्प॒र्जन्यः॑ स्त॒नय॒न्हन्ति॑ दु॒ष्कृतः॑ ॥२

वि । वृ॒क्षान् । ह॒न्ति॒ । उ॒त । ह॒न्ति॒ । र॒क्षसः॑ । विश्व॑म् । बि॒भा॒य॒ । भुव॑नम् । म॒हाऽव॑धात् ।

उ॒त । अना॑गाः । ई॒ष॒ते॒ । वृष्ण्य॑ऽवतः । यत् । प॒र्जन्यः॑ । स्त॒नय॑न् । हन्ति॑ । दु॒ःऽकृतः॑ ॥२

वि । वृक्षान् । हन्ति । उत । हन्ति । रक्षसः । विश्वम् । बिभाय । भुवनम् । महाऽवधात् ।

उत । अनागाः । ईषते । वृष्ण्यऽवतः। यत् । पर्जन्यः । स्तनयन् । हन्ति । दुःऽकृतः ॥२॥

अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः । तदेवात्र लिख्यते---- पर्जन्यो विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् महान् ह्यस्य वधः । अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः ' ( निरु. १० . ११ ) इति ॥

र॒थीव॒ कश॒याश्वाँ॑ अभिक्षि॒पन्ना॒विर्दू॒तान्कृ॑णुते व॒र्ष्याँ॒३॒ अह॑ ।

दू॒रात्सिं॒हस्य॑ स्त॒नथा॒ उदी॑रते॒ यत्प॒र्जन्यः॑ कृणु॒ते व॒र्ष्यं१॒ नभः॑ ॥३

र॒थीऽइ॑व । कश॑या । अश्वा॑न् । अ॒भि॒ऽक्षि॒पन् । आ॒विः । दू॒तान् । कृ॒णु॒ते॒ । व॒र्ष्या॑न् । अह॑ ।

दू॒रात् । सिं॒हस्य॑ । स्त॒नथाः॑ । उत् । ई॒र॒ते॒ । यत् । प॒र्जन्यः॑ । कृ॒णु॒ते । व॒र्ष्य॑म् । नभः॑ ॥३

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् । कृणुते । वर्ष्यान् । अह।

दूरात् । सिंहस्य । स्तनथाः । उत्। ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यम् । नभः ॥३॥

"रथीव रथस्वामीव। स यथा कशया अश्वान अभिक्षिपन् दूतान् भटान् आविष्करोति तद्वदसौ पजन्योऽपि "कशया “अश्वान् मेघान् "अभिक्षिपन् अभिप्रेरयन् 'वर्ष्यान् वर्षकान् "दूतान् दूतवत् वृष्टिप्रेरकान् मेघान् मरुतो वा "आविः "कृणुते प्रकटयति । "अह इति पूरणः । एवं सति “सिंहस्य। सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः । अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य “स्तनथाः गर्जनशब्दाः "दूरात् "उदीरते उद्गच्छन्ति । कदा। "यत् यदा “पर्जन्यः “नभः अन्तरिक्षं "वर्ष्यं वर्षोपेतं "कृणुते करोति तदा ।।

‘प्र वाताः' इति चतुर्थी पर्जन्यस्य चरोर्याज्या । सूत्रितं च--- प्र वाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृति ' ( आश्व. श्रौ. २ . १५) इति ॥

प्र वाता॒ वान्ति॑ प॒तय॑न्ति वि॒द्युत॒ उदोष॑धी॒र्जिह॑ते॒ पिन्व॑ते॒ स्वः॑ ।

इरा॒ विश्व॑स्मै॒ भुव॑नाय जायते॒ यत्प॒र्जन्यः॑ पृथि॒वीं रेत॒साव॑ति ॥४

प्र । वाताः॑ । वान्ति॑ । प॒तय॑न्ति । वि॒ऽद्युतः॑ । उत् । ओष॑धीः । जिह॑ते । पिन्व॑ते । स्वः॑ ।

इरा॑ । विश्व॑स्मै । भुव॑नाय । जा॒य॒ते॒ । यत् । प॒र्जन्यः॑ । पृ॒थि॒वीम् । रेत॑सा । अव॑ति ॥४

प्र । वाताः । वान्ति। पतयन्ति । विऽद्युतः । उत् । ओषधीः । जिहते । पिन्वते । स्वरिति स्वः ।

इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥ ४ ॥

“प्र “वान्ति "वाता: वृष्ट्यर्थम् । "पतयन्ति गच्छन्ति समन्तात् संचरन्ति "विद्युतः । “ओषधीः ओषधयः "उत् "जिहते उद्गच्छन्ति प्रवर्धन्ते । "स्वः अन्तरिक्षं "पिन्वते क्षरति । "इरा भूमिः "विश्वस्मै सर्वस्मै "भुवनाय सर्वजगद्धितीय "जायते समर्था भवति । कदैवमिति । “यत् यदा “पर्जन्यः देवः "पृथिवीं "रेतसा उदकेन "अवति रक्षति अभिगच्छति वा तदैवं भवति ।

यस्य॑ व्र॒ते पृ॑थि॒वी नन्न॑मीति॒ यस्य॑ व्र॒ते श॒फव॒ज्जर्भु॑रीति ।

यस्य॑ व्र॒त ओष॑धीर्वि॒श्वरू॑पा॒ः स न॑ः पर्जन्य॒ महि॒ शर्म॑ यच्छ ॥५

यस्य॑ । व्र॒ते । पृ॒थि॒वी । नम्न॑मीति । यस्य॑ । व्र॒ते । श॒फऽव॑त् । जर्भु॑रीति ।

यस्य॑ । व्र॒ते । ओष॑धीः । वि॒श्वऽरू॑पाः । सः । न॒ः । प॒र्ज॒न्य॒ । महिं । शर्म॑ । य॒च्छ॒ ॥५

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते । शफऽवत् । जर्भुरीति ।

यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥ ५ ॥

“यस्य पर्जन्यस्य व्रते कर्मणि "पृथिवी "नन्नमीति अत्यर्थं नमति सर्वेषामधो भवति । "यस्य “व्रते “शफवत् पादोपेतं गवादिकं "जर्भुरीति भ्रियते पूर्यते गच्छतीति वा । "यस्य "व्रते कर्मणि “ओषधीः ओषध्यः "विश्वरूपाः नानारूपा भवन्ति हे "पर्जन्य "सः महांस्त्वं “नः अस्मभ्यं "महि “शर्म महत् सुखं "यच्छ प्रयच्छ ॥ ॥ २७ ॥

दि॒वो नो॑ वृ॒ष्टिं म॑रुतो ररीध्वं॒ प्र पि॑न्वत॒ वृष्णो॒ अश्व॑स्य॒ धारा॑ः ।

अ॒र्वाङे॒तेन॑ स्तनयि॒त्नुनेह्य॒पो नि॑षि॒ञ्चन्नसु॑रः पि॒ता न॑ः ॥६

दि॒वः । न॒ः । वृ॒ष्टिम् । म॒रु॒त॒ः । र॒री॒ध्व॒म् । प्र । पि॒न्व॒त॒ । वृष्ण॑ः । अश्व॑स्य । धारा॑ः ।

अ॒र्वाङ् । ए॒तेन॑ । स्त॒न॒यि॒त्नुना॑ । आ । इ॒हि॒ । अ॒पः । नि॒ऽसि॒ञ्चन् । असु॑रः । पि॒ता । न॒ः ॥६

दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः ।

अर्वाङ्। एतेन । स्तनयित्नुना। आ । इहि। अपः । निऽसिञ्चन् । असुरः। पिता। नः ॥६॥

हे “मरुतः यूयं "दिवः अन्तरिक्षसकाशात् "नः अस्मदर्थं "वृष्टिं "ररीध्वं दत्त । "वृष्णः वर्षकस्य "अश्वस्य व्यापकस्य मेघस्य संबन्धिन्यः “धाराः उदकधाराः “प्र “पिन्वत प्रक्षरत । हे पर्जन्य त्वम् "एतेन "स्तनयित्नुना गर्जता मेघेन सह "अर्वाङ् अस्मदभिमुखम् “एहि आगच्छ। किं कुर्वन् । “अपः अम्भांसि "निषिञ्चन् स देवः "असुरः उदकानां निरसितापि सन् "नः अस्माकं “पिता पालकश्च ॥

अ॒भि क्र॑न्द स्त॒नय॒ गर्भ॒मा धा॑ उद॒न्वता॒ परि॑ दीया॒ रथे॑न ।

दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥७

अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्ऽवता । परि । दीय । रथेन ।

दृतिम् । सु । कर्ष । विऽसितम् । न्यञ्चम् । समाः । भवन्तु । उत्ऽवतः । निऽपादाः ॥७

अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्ऽवता । परि । दीय । रथेन ।

दृतिम् । सु । कर्ष । विऽसितम् । न्यञ्चम् । समाः । भवन्तु । उत्ऽवतः । निऽपादाः ॥७॥

"अभि भूम्यभिमुखं "क्रन्द शब्दय । तदेव पुनरुच्यते दाढ्र्याय । "स्तनय गर्ज। "गर्भं गर्भस्थानीयमुदकम् ओषधीषु “आ “धाः आधेहि । तदर्थम् "उदन्वता उदकवता "रथेन “परि “दीय परितो गच्छ। "दृतिं दृतिवदुदकधारकं मेघं "विषितं विशेषेण सितं बद्धं “न्यञ्चं न्यक् अधोमुखं “सु सुष्टु "कर्ष आकर्ष वृष्ट्यर्थम् । यद्वा । विषितं विमुक्तबन्धनमेवं कर्ष । एवं कृते उद्वतः ऊर्ध्ववन्तः उन्नतप्रदेशाः "निपादाः न्यग्भूतपादा निकृष्टपादा वा निम्नोन्नतप्रदेशाः समाः एकस्थाः "भवन्तु उदकपूर्णा भवन्त्वित्यर्थः ॥

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात् ।

घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥८

महान्तम् । कोशम् । उत् । अच । नि । सिञ्च । स्यन्दन्ताम् । कुल्याः । विऽसिताः । पुरस्तात् ।

घृतेन । द्यावापृथिवी इति । वि । उन्धि । सुऽप्रपानम् । भवतु । अघ्न्याभ्यः ॥८

महान्तम् । कोशम्। उत् । अच । नि । सिञ्च । स्यन्दन्ताम् । कुल्याः । विऽसिताः । पुरस्तात् ।

घृतेन । द्यावापृथिवी इति । वि। उन्धि । सुऽप्रपानम् । भवतु । अघ्न्याभ्यः ॥ ८ ॥

हे पर्जन्य त्वं "महान्तं प्रवृद्धं "कोशं कोशस्थानीयं मेघम् "उदच उद्गच्छ । उद्गमय वा । तथा कृत्वा "नि "षिञ्च नीचैः क्षारय । “कुल्याः नद्यः “विषिताः विष्यूताः सत्यः "स्यन्दन्तां प्रवहन्तु "पुरस्तात् पूर्वाभिमुखम् । प्रायेण नद्यः प्राच्यः स्यन्दन्ते। "घृतेन उदकेन "द्यावापृथिवी दिवं च पृथिवीं च "व्युन्धि क्लेदय अत्यधिकम् । "अघ्न्याभ्यः गोभ्यः "सुप्रपाणं सुष्टु प्रकर्षेण पातव्यमुदकं "भवतु ॥

यत्पर्जन्य कनिक्रदत्स्तनयन्हंसि दुष्कृतः ।

प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः ।

प्रतिं । इ॒दम् । विश्वं॑म् । मो॒द॒ते॒ । यत् । किम् । च॒ । पृ॒थि॒व्याम् । अधिं ॥९

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः ।

प्रति । इदम् । विश्वम्। मोदते । यत् । किम् । च । पृथिव्याम् । अधि ॥ ९॥

हे "पर्जन्य "यत् यदा त्वं "कनिक्रदत् अत्यर्थं शब्दयन् "स्तनयन् "दुष्कृतः पापकृतो मेघान् "हंसि विदारयसि तदानीम् "इदं "विश्वं जगत् "प्रति मोदते । विश्वं विशेष्यते । "यत्किं “च "पृथिव्यामधि भूम्यामधिष्ठितं यच्चराचरात्मकं तदिदं विश्वं मोदते हृष्यति । वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् ।।

अवं॑र्षीर्व॒र्षमुदु॒ षू गृं॑भा॒याक॒र्धन्वा॒न्यत्ये॑त॒वा उं ।

अजीं॑जन॒ ओषं॑धी॒र्भोजं॑नाय॒ कमु॒त प्र॒जाभ्यों॑ऽविदो मनी॒षाम् ॥१०

अवं॑र्षीः । व॒र्षम् । उत् । ऊं॒ इतिं । सु । गृ॒भा॒य॒ । अकः॑ । धन्वा॑नि । अतिं॑ऽए॒त॒वै । ऊं॒ इतिं ।

अजीं॑जनः । ओषं॑धीः । भोजं॑नाय । कम् । उ॒त । प्र॒ऽजाभ्यः॑ । अ॒वि॒द॒ः । म॒नी॒षाम् ॥१०

अवर्षीः । वर्षम् । उत् । ऊँ इति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवै । ऊँ इति ।

अजीजनः । ओषधीः । भोजनाय । कम् । उत । प्रऽजाभ्यः । अविदः । मनीषाम् ॥१०॥

इयमतिवृष्टिविमोचनी । हे पर्जन्य त्वम् "अवर्षीः वृष्टवानसि । "वर्षमुदु “षू "गृभाय उत्कृष्टं सु सुष्ठु गृभाय गृहाण । परिहरेत्यर्थः। “धन्वानि निरुदकप्रदेशान् "अकः जलवतः कृतवानसि । किमर्थम् । "अत्येतवा "उ अतिक्रम्य गन्तुम् । "ओषधीः "अजीजनः उदपादयः । किमर्थम् । “भोजनाय धनाय भोगाय वा । "कम् इत्ययं ‘शिशिरं जीवनाय कम्' इतिवत्पादपूरणः ( निरु. १. १० )। "उत अपि च "प्रजाभ्यः सकाशात् "मनीषां स्तुतिम् "अविदः प्राप्तवानसि ॥ ॥ २८ ॥

---

पर्जन्योपरि संदर्भाः (http://www.angelfire.com/indie/vedastudy/pur_index17/parjanya.htm)

## मण्डल ५

# ऋग्वेदः सूक्तं ५.८४

ऋग्वेदः - मण्डल ५
← सूक्तं ५.८३ सूक्तं ५.८४ सूक्तं ५.८५ →
भौमोऽत्रिः

दे. पृथिवी । अनुष्टुप्।

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।

प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥१॥

स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः ।

प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि ॥२॥

दृळ्हा चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा ।

यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥३॥

**सायणभाष्यम्**

'बळित्था' इति तृचात्मकं द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभम् । अनुक्रान्तं च--- बळित्था तृचं पार्थिवमानुष्टुभम्' इति । सूक्तविनियोगो लैङ्गिकः। आद्या देवानां हविःषु पृथिव्या अनुवाक्या । 'बळित्था पर्वतानां दृळ्हा चिद्या वनस्पतीन्' (आश्व.

श्रौ. ६. १४ ) इति हि सूत्रितम् । भूमिस्तोमे चैषा मरुत्वतीयशस्त्रे सूक्तमुखीया ( आश्व. श्रौ.९. ५) ।

बळि॒त्था पर्व॑तानां खि॒द्रं बि॑भर्षि पृथिवि ।

प्र या भूमिं॑ प्रवत्वति म॒ह्ना जि॒नोषि॑ महिनि ॥१

बट् । इ॒त्था । पर्व॑तानाम् । खि॒द्रम् । बि॒भ॒र्षि॒ । पृ॒थि॒वि॒ ।

प्र । या । भूमि॑म् । प्र॒व॒त्व॒ति॒ । म॒ह्ना । जि॒नोषि॑ । म॒हि॒नि॒ ॥१

बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ।।

प्र । या । भूमिम् । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥ १ ॥

द्विरूपा पृथिवी चैषा प्रत्यक्षा देवतापि च । मध्यस्थाना देवतोक्ता सात्र संबोध्य वर्ण्यते ॥ हे “पृथिवि प्रथनवति मध्यस्थानदेवते । त्वम् “इत्था इत्थम् अमुत्र अन्तरिक्षे वा “बट् सत्यं “पर्वतानां मेघानां वा “खिद्रं खेदनं भेदनं “बिभर्षि धारयसि । हे “महिनि महति हे “प्रवत्वति प्रकर्षवति प्रवणोदकवति वा "या त्वं “भूमिं प्रत्यक्षां पृथिवीं “मह्ना महत्त्वेन महतोदकेन वा “प्र “जिनोषि प्रकर्षेण प्रीणयसि ॥

स्तोमा॑सस्त्वा विचारिणि॒ प्रति॑ ष्टोभन्त्य॒क्तुभिः॑ ।

प्र या वाजं॒ न हेष॑न्तं पे॒रुमस्य॑स्यर्जुनि ॥२

स्तोमा॑सः । त्वा॒ । वि॒ऽचा॒रि॒णि॒ । प्रति॑ । स्तो॒भ॒न्ति॒ । अ॒क्तुऽभिः॑ ।

प्र । या । वाज॑म् । न । हेष॑न्तम् । पे॒रुम् । अस्य॑सि । अ॒र्जु॒नि॒ ॥२

स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभन्ति । अक्तुऽभिः ।

प्र । या । वाजम् । न । हेषन्तम् । पेरुम् । अस्यसि । अर्जुनि ॥ २ ॥

हे “विचारिणि विविधं चरणशीले पृथिवि देवि “त्वा त्वां “स्तोमासः स्तोतारः “अक्तुभिः गमनशीलैः स्तोत्रैः “प्रति “ष्टोभन्ति अभिष्टुवन्ति। किंच “या त्वं हेषन्तं शब्दयन्तं “वाजं न अश्वमिव उद्धृत्तं “पेरुं पूरकं मेघं “प्र “अस्यसि प्रक्षिपसि हे “अर्जुनि शुभ्रवर्णे गमनशीले वा ।।

देवानां हविःषु ‘ दृळ्हा चित्' इति पृथिव्या याज्या। एषैव भूमिस्तोमे निष्केवल्ये सूक्तमुखीया । सूत्रं तु पूर्वमेवोदाहृतम् ॥

दृ॒ळ्हा चि॒द्या व॒न॒स्पती॑न्क्ष्म॒या दर्धु॒र्ष्योज॑सा ।

यत्ते॑ अ॒भ्रस्य॑ वि॒द्युतो॑ दि॒वो वर्षं॑न्ति वृ॒ष्टयः॑ ॥३

दृ॒ळ्हा । चि॒त् । या । व॒न॒स्पती॑न् । क्ष्म॒या । दर्धि॑र्षि । ओज॑सा ।

यत् । ते॒ । अ॒भ्रस्य॑ । वि॒ऽद्युतः॑ । दि॒वः । वर्षं॑न्ति । वृ॒ष्टयः॑ ॥३

दृळ्हा। चित् । या । वनस्पतीन् । क्ष्मया । दधर्षि । ओज॑सा ।

यत् । ते । अभ्रस्य । विऽद्युतः । दिवः । वर्षन्ति । वृष्टयः ॥ ३ ॥

हे पृथिवि “या त्वं “दृळ्हा “चित् ॥ ‘ सुपा सुलुक्' इति तृतीयाया आकारः ॥ दृढया “क्ष्मया भूम्या सह “वनस्पतीन् वृक्षान् “ओजसा बलेन “दधर्षि धारयसि । अथवा दृढेति विधेयविशेषणम् । वनस्पतीन् दृढान् कृत्वा धारयसि इत्यर्थः । “यत् यस्याः “ते तव संबन्धिनः “वृष्टयः वर्षका मेघाः “विद्युतः विद्योतमानात् “अभ्रस्य ॥ पञ्चम्यर्थे षष्ठी । अभ्रात् अपां हर्तुः “दिवः अन्तरिक्षात् आदित्याद्वा “वर्षन्ति । अथवा यत् यस्यास्ते तवाभ्रस्य मेघस्य वृष्टय उदकसंघाता विद्युतो विद्योतमानाया दिवः सकाशात् वर्षन्ति पतन्ति ॥ ॥ २९ ॥

# ऋग्वेदः सूक्तं ५.८५



दे. वरुणः। त्रिष्टुप् ।

---

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥१॥
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥२॥
नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥३॥
उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥४॥
इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥५॥
इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।

एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥६॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा ।

वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥७॥

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।

सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥८॥

**सायणभाष्यम्**

‘ प्र सम्राजे ' इत्यष्टर्चं त्रयोदशं सूक्तमात्रेयं त्रैष्टुभं वारुणम् । अनुक्रम्यते च- प्र सम्राजेऽष्टौ वारुणम्' इति । विनियोगो लैङ्गिकः ॥

प्र स॒म्राजे॑ बृ॒हद॑र्चा गभी॒रं ब्रह्म॑ प्रि॒यं वरु॑णाय श्रु॒ताय॑ ।

वि यो ज॒घान॑ शमि॒तेव॒ चर्मो॑प॒स्तिरे॑ पृथि॒वीं सूर्या॑य ॥१

प्र । स॒म्ऽराजे॑ । बृ॒हत् । अ॒र्च॒ । ग॒भी॒रम् । ब्रह्म॑ । प्रि॒यम् । वरु॑णाय । श्रु॒ताय॑ ।

वि । यः । ज॒घान॑ । श॒मि॒ताऽइ॑व । चर्म॑ । उ॒प॒ऽस्तिरे॑ । पृ॒थि॒वीम् । सूर्या॑य ॥१

प्र । सम्ऽराजे । बृहत् । अर्च। गभीरम् । ब्रह्म । प्रियम् । वरुणाय । श्रुताय ।

वि। यः । जघाने । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ।। १ ।।

अत्रिः स्वात्मानं संबोध्य ब्रवीति । हे अत्रे त्वं “सम्राजे सम्यक् राजमानायेश्वराय “श्रुताय सर्वत्र श्रूयमाणाय “वरुणाय उपद्रवस्य निवारकाय जनानामावरकाय चैतन्नामकाय देवाय "बृहत् प्रभूतं “गभीरं दुरवगाहं बह्वर्थोपेतं "प्रियं प्रियभूतं “ब्रह्म स्तोत्ररूपं कर्म “प्र “अर्च प्रार्चय । प्रोच्चारयेत्यर्थः । “यः वरुणः “शमितेव “चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् “पृथिवीं विस्तीर्णमन्तरिक्षम् ॥ ‘ तृतीयस्यां पृथिव्याम् ' (तै. सं. १. २. १२. १ ) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् ॥ "सूर्याय सूर्यस्य “उपस्तिरे आस्तरणाय "वि “जघान विस्तारयामास । विस्तृतं हि व्यवहारयोग्यं भवति तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् । ‘ उरुं हि राजा वरुणश्चकार' (ऋ. सं. १. २४. ८) इति ह्युक्तम् ।।

वने॑षु॒ व्य१॒॑न्तरि॑क्षं तता॒न॒ वाज॒मर्व॑त्सु॒ पय॑ उ॒स्रिया॑सु ।

हृ॒त्सु क्रतुं॒ वरु॑णो अ॒प्स्व१॒॑ग्निं दि॒वि सूर्य॑मदधा॒त्सोम॒मद्रौ॑ ॥२

वने॑षु । वि । अ॒न्तरि॑क्षम् । त॒ता॒न॒ । वाज॑म् । अर्व॑त्ऽसु । पयः॑ । उ॒स्रियासु ।

हृ॒त्ऽसु । क्रतु॑म् । वरु॑णः । अ॒प्ऽसु । अ॒ग्निम् । दि॒वि । सूर्य॑म् । अ॒द॒धा॒त् । सोम॑म् । अद्रौ॑ ॥२

वनेषु । वि। अन्तरिक्षम् । ततान । वाजम् । अर्वत्सु । पयः । उस्रियासु ।

हृत्ऽसु । क्रतुम्। वरुणः । अप्ऽसु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ ॥ २ ॥

अयं वरुणः “वनेषु वृक्षाग्रेषु “अन्तरिक्षं "वि “ततान विस्तारितवान् । तथा वाजसनेयकं - ‘ वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान' इति । “वाजं बलम् अर्वत्सु अश्वेषु वि ततान । “पयः क्षीरम् "उस्रियासु गोषु । उस्रियेति गोनाम । उत्स्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः । "हृत्सु हृदयेषु “क्रतुं कर्मसंकल्पम् । यद्धि मनसा ध्यायति तत्कर्मणा करोति । “अप्सु उदकेषु “अग्निं वैद्युतमौर्वं वा । सर्वत्र वि ततानेति संबन्धः । किंच “दिवि द्युलोके "सूर्यम् “अदधात् स्थापितवान् । “सोमं च "अद्रौ पर्वतेऽदधात् ॥

नी॒चीन॑बारं॒ वरु॑णः॒ कव॑न्धं॒ प्र स॑सर्ज॒ रोद॑सी अ॒न्तरि॑क्षम् ।

तेन॒ विश्व॑स्य॒ भुव॑नस्य॒ राजा॒ यवं॒ न वृ॒ष्टिर्व्यु॑नत्ति॒ भूम॑ ॥३

नी॒चीन॑ऽबारम् । वरु॑णः । कव॑न्धम् । प्र । स॒स॒र्ज॒ । रोद॑सी॒ इति॑ । अ॒न्तरि॑क्षम् ।

तेन॑ । विश्व॑स्य । भुव॑नस्य । राजा॑ । यव॑म् । न । वृ॒ष्टिः । वि । उ॒न॒त्ति॒ । भूम॑ ॥३

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज । रोदसी इति । अन्तरिक्षम् ।

तेन । विश्वस्य । भुवनस्य । राजा । यवम् । न । वृष्टिः । वि। उनत्ति । भूम ॥ ३ ॥

“नीचीनबारम् अधोमुखबिलं “प्र ससर्ज कृतवान् । कम् । “कवन्धम् । कवनमुदकम् । “तत् धीयतेऽत्रेति कवन्धो मेघः । तं तथाकरोत् । अथवा कवन्धमुदकम् । तदुदकं नीचीनबारं नीचीननिर्गमनबिलं चकार । मेघं विदार्य उदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । “रोदसी द्यावापृथिव्यौ “अन्तरिक्षं च प्रति । लोकत्रयहितायेत्यर्थः । “तेन उदकेन “विश्वस्य सर्वस्य “भुवनस्य भूतजातस्य “राजा स्वामी “वरुणः "भूम भूमिं “व्युनत्ति क्लेदयति । “वृष्टिः सेक्ता पुमान् “यवं “न यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति संबन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र ‘नीचीनबारं वरुणः कवन्धम् ' ( निरु. १०. ४ ) इत्यादिनिरुक्तं द्रष्टव्यम् ॥

उ॒नत्ति॒ भूमिं॑ पृथि॒वीमु॒त द्यां य॒दा दु॒ग्धं वरु॑णो॒ वष्ट्यादित् ।

सम॒भ्रेण॑ वसत॒ पर्व॑तासस्तविषी॒यन्तः॑ श्रथयन्त वी॒राः ॥४

उ॒नत्ति॑ । भूमि॑म् । पृ॒थि॒वीम् । उ॒त । द्याम् । य॒दा । दु॒ग्धम् । वरु॑णः । वष्टि॑ । आत् । इत् ।

सम् । अ॒भ्रेण॑ । व॒स॒त॒ । पर्व॑तासः । त॒वि॒षी॒ऽयन्तः॑ । श्र॒थ॒य॒न्त॒ । वी॒राः ॥४

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् । यदा । दुग्धम् । वरुणः । वष्टि । आत् । इत् ।

सम् । अभ्रेण । वसत । पर्वतासः । तविषीऽयन्तः । श्रथयन्त । वीराः ॥ ४ ॥

“वरुणः “भूमिं “पृथिवीं प्रथितमन्तरिक्षम् । अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तम् । “उत अपि च “द्यां द्युलोकम् "उनत्ति क्लेदयति । “यदा अयं “दुग्धम् उदकपूरणं “वष्टि कामयते । अथवा दुग्धमुदकम् । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । औषध्यादयः प्रवर्धन्तामिति यदा कामयते "आदित् अनन्तरमेव “सं “वसत समाच्छादयन्ति । के। "पर्वतासः पर्ववन्तः। अद्रयः । केन । “अभ्रेण मेघेन । किंच "तविषीयन्तः बलमिच्छन्तः “वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः “श्रथयन्त श्रथयन्ति मेघान् ।।

इ॒मामू॒ ष्वा॑सु॒रस्य॑ श्रु॒तस्य॑ म॒हीं मा॒यां वरु॑णस्य॒ प्र वो॑चम् ।

माने॑नेव तस्थि॒वाँ अ॒न्तरि॑क्षे॒ वि यो म॒मे पृ॑थि॒वीं सूर्ये॑ण ॥५

इ॒माम् । ऊं॒ इति॑ । सु । आ॒सु॒रस्य॑ । श्रु॒तस्य॑ । म॒हीम् । मा॒याम् । वरु॑णस्य । प्र । वो॒च॒म् ।

माने॑नऽइव । त॒स्थि॒ऽवान् । अ॒न्तरि॑क्षे । वि । यः । म॒मे । पृ॒थि॒वीम् । सूर्ये॑ण ॥५

इमाम् । ॐ इति । सु । आसुरस्य । श्रुतस्य । महीम् । मायाम् । वरुणस्य । प्र । वोचम् ।

मानेनऽइव । तस्थिवान् । अन्तरिक्षे । वि । यः । ममे । पृथिवीम् । सूर्येण ।। ५ ।।

“आसुरस्य असुरसंबन्धिनः । असुराणामस्य च वध्यघातकभावः संबन्धः । असुरहन्तुरित्यर्थः । अथवा असुरो मेघः । प्राणदानात् तत्संबन्धिनः “श्रुतस्य विश्रुतस्य “महीं महतीम् "इमां “मायां प्रज्ञां “प्र “वोचं प्रब्रवीमि । कैषा मायेति सोच्यते । “यः वरुणः अन्तरिक्षे “तस्थिवान् तिष्ठन् “मानेनेव दण्डेनेव “सूर्येण “पृथिवीम् अन्तरिक्षं "वि "ममे परिच्छिनत्ति तस्यैषा माया ॥ ॥ ३० ॥

इ॒मामू॒ नु क॒वित॑मस्य मा॒यां म॒हीं दे॒वस्य॒ नकि॒रा द॑धर्ष ।

एकं॒ यदु॒द्ना न पृ॒णन्त्येनी॑रासि॒ञ्चन्ती॑र॒वन॑यः समु॒द्रम् ॥६

इ॒माम् । ऊं॒ इति॑ । नु । क॒विऽत॑मस्य । मा॒याम् । म॒हीम् । दे॒वस्य॑ । नकिः॑ । आ । द॒धु॒र्ष॒ ।

एक॑म् । यत् । उ॒द्ना । न । पृ॒णन्ति॑ । एनीः॑ । आ॒ऽसि॒ञ्चन्तीः॑ । अ॒वन॑यः । स॒मु॒द्रम् ॥६

इमाम् । ॐ इति । नु । कविऽतमस्य । मायाम् । महीम् । देवस्य । नकिः । आ । दधर्ष ।

एकम् । यत् । उद्ना । न । पृणन्ति । एनीः । आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥ ६॥

“कवितमस्य प्रकृष्टप्रज्ञस्य “देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य “इमां सर्वप्रसिद्धां “महीं महतीं "मायां प्रज्ञां "नकिः नैव “आ “दधर्ष न हिनस्ति कश्चिदपि । “ऊ “नु इति पूरणौ। “यत् यस्मात् “एकं “समुद्रम् “उद्ना उदकेन “न “पृणन्ति न पूरयन्ति । काः। “एनीः एन्यः शुभ्रा गमनशीला वा “आसिञ्चन्तीः उदकमासेचयन्त्यः “अवनयः नद्यः । बह्व्यो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्रं पूरयन्तीति । इदं वरुणस्य महत् कर्म इति । अत्र अन्तरिक्षविस्तारादि समुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं तस्य वरुणादिरूपावस्थानात् । एष ब्रह्मेत्यादिश्रुतेः ॥

अ॒र्य॒म्यं॑ वरुण मि॒त्र्यं॑ वा॒ सखा॑यं वा॒ सद॒मिद्भ्रात॑रं वा ।

वे॒शं वा॒ नित्यं॑ वरु॒णार॑णं वा॒ यत्सी॒माग॑श्चकृ॒मा शि॒श्रथ॒स्तत् ॥७

अ॒र्य॒म्य॑म् । व॒रु॒ण॒ । मि॒त्र्य॑म् । वा॒ । सखा॑यम् । वा॒ । सद॑म् । इत् । भ्रात॑रम् । वा॒ ।

वे॒शम् । वा॒ । नित्य॑म् । व॒रु॒ण॒ । अर॑णम् । वा॒ । यत् । सी॒म् । आगः॑ । च॒कृ॒म । शि॒श्रथः॑ । तत् ॥७

अर्यम्यम् । वरुण । मित्र्यम् । वा। सखायम् । वा। सदम् । इत् । भ्रातरम् । वा।

वेशम् । वा । नित्यम् । वरुण । अरणम् । वा ।। यत् । सीम् । आगः । चकृम । शिश्रथः । तत् ॥ ७ ॥

हे “वरुण “अर्यम्यम् । अर्यमैवार्यभ्यः ॥ स्वार्थिको यत् । अर्तेरिदं रूपम् ॥ प्रदातारमित्यर्थः । अथवा ईरणात् मननात् च शास्तीत्यर्यमा गुरुः । तम् । “वा अथवा “मित्र्यम् ॥ ' ञिमिदा स्नेहने ' इत्यस्मात् मित्रम् । स्वार्थिको यत् ॥ अनुरक्तमित्यर्थः । “वा अथवा "सखायं समानख्यानं “सदमित् सर्वदैव “भ्रातरं “वा । “नित्यं निरन्तरं "वेशं निकटनिकेतनवर्तिनं “वा । “अरणं “वा अशब्दमित्यर्थः । अथवा अरणमदातारं वा नित्यं निरन्तरम् । एतान् प्रति "यत्सीं यदेतत् “आगः अपराधं “चकृम “तत् "शिश्रथः अस्मत्तो विनाशय ॥

कि॒त॒वासो॒ यद्रि॑रि॒पुर्न दी॒वि यद्वा॑ घा स॒त्यमु॒त यन्न वि॒द्म ।

सर्वा॒ ता वि ष्यं शिथि॒रेवं दे॒वाधा॑ ते स्याम वरुण प्रि॒यासः॑ ॥८

कि॒त॒वासः॑ । यत् । रि॒रि॒पुः । न । दी॒वि । यत् । वा॒ । घ॒ । स॒त्यम् । उ॒त । यत् । न । वि॒द्म ।

सर्वा॑ । ता । वि । स्य॒ । शि॒थि॒राऽइ॑व । दे॒व॒ । अध॑ । ते॒ । स्या॒म॒ । व॒रु॒ण॒ । प्रि॒यासः॑ ॥८

कितवासः। यत् । रिरिपुः । न । दीवि । यत्। वा। घ। सत्यम् । उत । यत् । न । विद्म।

सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥ ८॥

"कितवासः कितवा द्यूतकृतः । किं तवास्ति सर्वं मया जितमिति वदतीति कितवः । ते “दीवि “न देवने द्यूते यथा "यद्रिरिपुः लेपयन्ति पापमारोपयन्ति तथास्मासु द्वेष्टारो मयि त्वमेतत् पापमकरोः इत्याक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः । “वा अथवा । “घ इति पूरणः । “यत् पापं "सत्यम् आरोपमन्तरेण कृतवन्तः स्मः। “उत अपि च “यत् कृतं पापं “न विद्म न जानीमः “ता तानि “सर्वा सर्वाणि “शिथिरेव शिथिलानीव शिथिलबन्धनानि फलानीव “वि “ष्य विमोचय ॥ स्यतिरुपसृष्टो विमोचने ॥ हे “देव "अध अनन्तरं “ते तव “प्रियासः प्रियाः “स्याम भवेम ॥ ॥ ३१ ॥

# ऋग्वेदः सूक्तं ५.८६



दे. इन्द्राग्नी। अनुष्टुप्, ६ विराट्पूर्वा ।

इन्द्राग्नी यमवथ उभा वाजेषु मर्त्यम् ।
दृळ्हा चित्स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥१॥
या पृतनासु दुष्टरा या वाजेषु श्रवाय्या ।
या पञ्च चर्षणीरभीन्द्राग्नी ता हवामहे ॥२॥
तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः ।
प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥३॥
ता वामेषे रथानामिन्द्राग्नी हवामहे ।
पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥४॥
ता वृधन्तावनु द्यून्मर्ताय देवावदभा ।
अर्हन्ता चित्पुरो दधेऽंशेव देवावर्वते ॥५॥

एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।

ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम् ॥६॥

**सायणभाष्यम्**

'इन्द्राग्नी यम्' इति षड्चं चतुर्दशं सूक्तमत्रेरार्षमानुष्टुभमैन्द्राग्नम् । षष्ठी विराट्पूर्वा । ' आद्यौ दशकावष्टकास्त्रयः' ( अनु. ९, ११ ) इति परिभाषितत्वात् । तथा चानुक्रान्तम्-- ' इन्द्राग्नी षडैन्द्राग्नमानुष्टुभं विराट्पूर्वान्तम्' इति । विनियोगो लैङ्गिकः ॥

इन्द्रा॑ग्नी॒ यमव॑थ उ॒भा वाजे॑षु॒ मर्त्य॑म् ।

दृ॒ळ्हा चि॒त्स प्र भे॑दति द्यु॒म्ना वाणी॑रिव त्रि॒तः ॥१

इन्द्रा॑ग्नी॒ इति॑ । यम् । अव॑थः । उ॒भा । वाजे॑षु । मर्त्य॑म् ।

दृ॒ळ्हा । चि॒त् । सः । प्र । भे॒द॒ति॒ । द्यु॒म्ना । वाणीः॑ऽइव । त्रि॒तः ॥१

इन्द्राग्नी इति । यम् । अवथः । उभा । वाजेषु । मर्त्यम् ।

दृळ्हा। चित्। सः । प्र। भेदति । द्युम्ना । वाणीःऽइव । त्रितः ॥ १ ॥

हे “इन्द्राग्नी “उभा उभौ परस्परावियुक्तौ युवां “यं मर्त्यम् “अवथः रक्षथः "वाजेषु संग्रामेषु “सः मर्त्यः “दृळ्हा “चित् दृढान्यपि “द्युम्ना द्योतमानानि धनानि शत्रुसंबन्धीनि “भेदति भिनत्ति । “त्रितः ऋषिः वाणीरिव प्रतिवादिवाक्यानीव । अथवा त्रिषु स्थानेषु वर्तमानोऽग्निः शत्रूणां वाक्यानीव ॥

या पृत॑नासु दु॒ष्टरा॒ या वाजे॑षु श्र॒वाय्या॑ ।

या पञ्च॑ चर्ष॒णीर॒भीन्द्रा॒ग्नी ता ह॑वामहे ॥२

या । पृत॑नासु । दु॒स्तरा॑ । या । वाजे॑षु । श्र॒वाय्या॑ ।

या । पञ्च॑ । च॒र्ष॒णीः । अ॒भि । इ॒न्द्रा॒ग्नी इति॑ । ता । ह॒वा॒म॒हे॒ ॥२

या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या ।

या । पञ्च । चर्षणीः । अभि । इन्द्राग्नी इति । ता । हवामहे ॥ २ ॥

"या यौ “इन्द्राग्नी पृतनासु "दुष्टरा दुष्टरौ अनभिभाव्यौ । “या यौ च “वाजेषु संग्रामेषु अन्नेषु वा “श्रवाय्या श्रवाय्यौ स्तुत्यौ । “या यौ “पञ्च “चर्षणीः । चर्षणयो मनुष्याः । तान् “अभि । रक्षतः इति शेषः । “ता तौ महानुभावौ “हवामहे स्तुमः ॥

तयो॒रिदम॑व॒च्छव॑स्ति॒ग्मा दि॒द्युन्म॒घोनोः॑ ।

प्रति॒ द्रुणा॒ गभ॑स्त्यो॒र्गवां॑ वृत्र॒घ्न एष॑ते ॥३

तयोः॑ । इत् । अम॑ऽवत् । शवः॑ । ति॒ग्मा । दि॒द्युत् । म॒घोनोः॑ ।

प्रति॑ । द्रुणा॑ । गभ॑स्त्योः । गवा॑म् । वृ॒त्र॒ऽघ्ने । आ । ई॒ष॒ते॒ ॥३

तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः ।

प्रति । द्रुणा । गभस्त्योः । गवाम् । वृत्रऽघ्ने । आ । ईषते ॥ ३ ॥

“अमवत् अभिभावुकं “शवः बलं “तयोरित् तयोरेव । “मघोनोः मघवतोः अन्नवतोर्धनवतोर्वा तयोः “दिद्युत् वज्रं “तिग्मा तीक्ष्णं वर्तते “गभस्त्योः हस्तयोः । एवंभूतौ देवौ “गवाम् उदकानां पणिभिरपहृतानां वा गवां लाभाय “द्रुणा द्रुमविकारेण गमनशीलेन वा एकेन रथेन "वृत्रघ्ने आवरकमेघहननाय तथाविधवृत्रासुरवधाय वा "प्रति “ईषते प्रतिगच्छतः ॥

ता वा॒मेषे॒ रथा॑नामिन्द्रा॒ग्नी ह॑वामहे ।

पती॑ तु॒रस्य॒ राध॑सो वि॒द्वांसा॒ गिर्व॑णस्तमा ॥४

ता । वा॒म् । एषे॑ । रथा॑नाम् । इ॒न्द्रा॒ग्नी इति॑ । ह॒वा॒म॒हे॒ ।

पती॒ इति॑ । तु॒रस्य॑ । राध॑सः । वि॒द्वांसा॑ । गिर्व॑णःऽतमा ॥४

ता। वाम् । एषे । रथानाम् । इन्द्राग्नी इति । हवामहे ।

पती इति । तुरस्य । राधसः । विद्वांसा । गिर्वणःऽतमा ॥ ४ ॥

हे देवौ “ता तौ वक्ष्यमाणगुणौ "वां युवां “हवामहे स्तुमः । किमर्थम् । “रथानाम् “एषे युद्धे रथानां प्रेरणाय । कीदृशौ युवाम् । “इन्द्राग्नी इन्द्रमग्निं च परस्परयुग्मभूतौ "तुरस्य जङ्गमरूपस्य “राधसः धनादिलक्षणस्य “पती स्वामिनौ “विद्वांसा सर्वज्ञौ “गिर्वणस्तमा गीर्भिर्वननीयतमौ। ईदृशौ युवां हवामहे ।।

ता वृ॒धन्ता॒वनु॒ द्यून्मर्ता॑य दे॒वाव॒दभा॑ ।

अर्ह॑न्ता चित्पु॒रो द॒धें॑ऽशे॑व दे॒वावर्व॑ते ॥५

ता । वृ॒धन्तौ॑ । अनु॑ । द्यून् । मर्ता॑य । दे॒वौ । अ॒दभा॑ ।

अर्ह॑न्ता । चि॒त् । पु॒रः । द॒धे॒ । अंशा॑ऽइव । दे॒वौ । अर्व॑ते ॥५

ता। वृधन्तौ । अनु । द्यून् । मर्ताय । देवौ । अदभा ।

अर्हन्ता । चित् । पुरः । दधे । अंशाऽइव । देवौ । अर्वते ।। ५ ।।

"ता तौ "अनु “द्यून् प्रतिदिनं “वृधन्तौ वर्धमानौ । सर्वदा प्रवृद्धावित्यर्थः । वर्धने दृष्टान्तः । मर्तेव मनुष्याविव । तौ यथा प्रतिदिनं वर्धेते । "देवौ द्योतमानौ “अदभा अहिंस्यौ “अर्हन्ता “चित् प्रकर्षेण पूज्यौ । चिदिति पूजायाम् । तादृशौ महानुभावौ "देवौ "अर्वते अश्वलाभाय "पुरो “दधे पुरस्कुर्वे । "अंशेव । अंशो नाम द्वादशादित्यमध्यवर्ती देवः । स भगस्याप्युपलक्षकः । अंशाविव आदित्याविव । दीप्तावित्यर्थः ॥

ए॒वेन्द्रा॒ग्निभ्या॒महा॑वि ह॒व्यं शू॒ष्यं॑ घृ॒तं न पू॒तमद्रि॑भिः ।

ता सू॒रिषु॒ श्रवो॑ बृ॒हद्र॒यिं गृ॒णत्सु॑ दिधृत॒मिषं॑ गृ॒णत्सु॑ दिधृतम् ॥६

ए॒व । इ॒न्द्रा॒ग्निऽभ्या॑म् । अहा॑वि । ह॒व्यम् । शू॒ष्य॑म् । घृ॒तम् । न । पू॒तम् । अद्रि॑ऽभिः ।

ता । सू॒रिषु॑ । श्रवः॑ । बृ॒हत् । र॒यिम् । गृ॒णत्ऽसु॑ । दि॒धृ॒त॒म् । इष॑म् । गृ॒णत्ऽसु॑ । दि॒धृ॒त॒म् ॥६

एव । इन्द्राग्निऽभ्याम् । अहावि । हव्यम् । शूष्यम् । घृतम् । न । पूतम् । अद्रिऽभिः ।

ता। सुरिषु । श्रवः । बृहत् । रयिम् । गृणत्ऽसु । दिधृतम् ।। इषम् । गृणत्ऽसु । दिधृतम् ॥ ६ ॥

“एव एवमिदानीं क्रियमाणप्रकारेण । स्तुतिसाहित्येनेत्यर्थः । "इन्द्राग्निभ्यां "हव्यं हविः “अहावि परित्यक्तमासीत् । कीदृशं तत् । "शूष्यं बलकरम् । किमिव । "अद्रिभिः ग्रावभिः “पूतम् अभिषुतं “घृतं न सोमरसमिव । तद्यथा युवाभ्यां प्रदीयते तद्वच्चरुपुरोडाशादिकमपि । "ता तौ देवौ “सूरिषु मेधाविष्वस्मासु "बृहत् प्रभूतं “श्रवः अन्नं यशो वा "रयिं धनं च “दिधृतं धारयतम् “इषम् अन्नं "गृणत्सु स्तुवत्सु दिधृतम् । पुनरुक्तिरादरार्था ॥ ॥ ३२ ॥

# ऋग्वेदः सूक्तं ५.८७

ऋग्वेदः - मण्डल ५
← सूक्तं ५.८६ सूक्तं ५.८७ सूक्तं ६.१ →
एवयामरुदात्रेयः

दे. मरुतः। अतिजगती

0:00 / 0:00

*एवयामरुत.*

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥१॥
प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत एवयामरुत् ।
क्रत्वा तद्वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥२॥

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।

न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्यन्द्रासो धुनीनाम् ॥३॥

स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस एवयामरुत् ।

यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥

स्वनो न वोऽमवान्रेजयद्वृषा त्वेषो ययिस्तविष एवयामरुत् ।

येना सहन्त ऋञ्जत स्वरोचिष स्थारश्मानो हिरण्ययाः स्वायुधास इष्मिणः ॥५॥

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत् ।

स्थातारो हि प्रसितौ संदृशि स्थन ते न उरुष्यता निदः शुशुक्वांसो नाग्नयः ॥६॥

ते रुद्रासः सुमखा अग्नयो यथा तुविद्युम्ना अवन्त्वेवयामरुत् ।

दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्धांस्यद्भुतैनसाम् ॥७॥

अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत् ।

विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो न दंसनाप द्वेषांसि सनुतः ॥८॥

गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत् ।

ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥९॥

**सायणभाष्यम्**

‘ प्र वो महे' इति नवर्चं पञ्चदशं सूक्तम् एवयामरुदाख्यस्य आत्रेयस्य मुनेरार्षं मरुद्देवताकमतिजगतीच्छन्दस्कम् । तथा चानुक्रमणिका--' प्र वो नवैवयामरुन्मारुतमतिजागतम्' इति । दशरात्रे षष्ठेऽहनि तृतीयसवनेऽच्छावाकशस्त्रे इदं सूक्तम् । सूत्रितं च-- एवयामरुदुक्तो वृषाकपिना' ( आश्व. श्रौ. ८. ४) इति ।

प्र वों म॒हे म॒तयों यन्तु॒ विष्णं॑वे म॒रुत्वं॑ते गिरि॒जा एं॑व॒याम॑रुत् ।

प्र शर्धा॑य॒ प्रयं॑ज्यवे सुखा॒दयें त॒वसें भ॒न्ददिं॑ष्टये॒ धुनिं॑व्रताय॒ शवं॑से ॥१

प्र । व॒ः । म॒हे । म॒तयः॑ । य॒न्तु॒ । विष्णं॑वे । म॒रुत्वं॑ते । गि॒रि॒ऽजाः । ए॒व॒याम॑रुत् ।

प्र । शर्धा॑य । प्रऽय॑ज्यवे । सु॒ऽखा॒दये॑ । त॒वसे॑ । भ॒न्दत्ऽइ॑ष्टये । धुनि॑ऽव्रताय । शव॑से ॥१

प्र। वः । महे । मतयः । यन्तु । विष्णवे ! मरुत्वते । गिरिऽजाः । एवयामरुत् ।

प्र । शर्धाय । प्रऽयज्यते । सुऽखादये । तवसे । भन्दत्ऽइष्टये । धुनिऽव्रताय । शवसे ॥१॥

“प्र “यन्तु प्रगच्छन्तु “गिरिजाः वाचि निष्पन्नाः “मतयः स्तुतयः । कस्मै । "वः तुभ्यम् । वचनव्यत्ययः । “विष्णवे व्याप्तायेन्द्राय विष्णवे वा "मरुत्वते मरुद्भिस्तद्वते । कस्य स्तुतय इत्युच्यते । “एवयामरुत् एतन्नामकस्य ऋषेः ॥ षष्ठ्या लुक् ॥ अथवा अयमृषिर्गिरिजाः स्तुतेर्जनयिता भवति । उत्तरार्धे मरुत्स्तुतिः। किंच “प्र यन्तु स्तुतयः । कस्मै । "शर्धाय बलाय मारुताय । इतरत् सर्वं बलविशेषणम् । “प्रयज्यवे प्रकर्षेण यष्टव्याय "सुखादये शोभनाभरणाय । खादिः आभरणविशेषः । ‘हस्तेषु खादिश्च' ( ऋ. सं. १. १६८. ३); ‘ पत्सु खादयः' (ऋ. सं. ५. ५४, ११) इति च श्रुतेः । “तवसे बलवते “भन्ददिष्टये । स्तुतिरूपा इष्टिर्यस्य तद्भन्ददिष्टि । तस्मै “धुनिव्रताय मेघानां चालनं कर्म यस्य तादृशाय “शवसे गमनवते ॥

प्र ये जा॒ता म॑हि॒ना ये च॒ नु स्व॒यं प्र वि॒द्मना॑ ब्रु॒वत॑ एव॒याम॑रुत् ।

क्रत्वा॒ तद्वो॑ मरुतो॒ नाधृषे॒ शवो॑ दा॒ना म॒ह्ना तदे॑षा॒मधृ॑ष्टासो॒ नाद्र॑यः ॥२

प्र । ये । जा॒ताः । म॒हि॒ना । ये । च॒ । नु । स्व॒यम् । प्र । वि॒द्मना॑ । ब्रु॒वते॑ । ए॒व॒याम॑रुत् ।

क्रत्वा॑ । तत् । व॒ः । म॒रु॒त॒ः । न । आ॒ऽधृषे॑ । शव॑ः । दा॒ना । म॒ह्ना । तत् । ए॒षा॒म् । अधृ॑ष्टासः । न । अद्र॑यः ॥२

प्र । ये । जाताः । महिना । ये । च । नु । स्वयम् । प्र । विद्मना । ब्रुवते । एवयामरुत् ।

क्रत्वा । तत् । वः । मरुतः । न । आऽधृषे । शवः । दाना । मह्ना । तत् । एषाम् । अधृष्टासः । न । अद्रयः ॥२

"ये "महिना महता विष्णुना इन्द्रेण वा सह “प्र “जाताः प्रादुर्भूतास्तान् ब्रुवते । "ये “च “नु क्षिप्रं "स्वयम् एव "विद्मना यज्ञगमनविषयज्ञानेन सह "प्र जाताः प्रादुर्भूतास्तान् मरुतः “एवयामरुत् “ब्रुवते स्तौति ॥ प्रेत्ययमाख्यातेन वा संबन्धनीयः । ब्रुवते इति व्यत्ययेन बहुवचनम् । एकवचने वा छान्दसः शः । निघाताभावश्छान्दसः ।। अथ प्रत्यक्षवादः । हे “मरुतः “वः युष्माकं "तत् प्रसिद्धं “शवः बलं "क्रत्वा चालनादिरूपेण कर्मणा युक्तं "न “आधृषे कैश्चिदपि आधर्षणीयं न भवति । अन्येषामसुरादीनां क्रत्वा कर्मणा वा अनभिभाव्यं भवति ॥ कृत्यार्थे केन् ॥ किंच “एषां वः “तत् बलं "दाना अभिमतदानेन "मह्ना महत्त्वेन च उपेतम् । यूयं प्रबलाः। "अधृष्टासः अधर्षणीयाः । तत्र दृष्टान्तः। "अद्रयः “न। ते यथा अधृष्यास्तद्वत् यूयमपि ॥

प्र ये दि॒वो बृ॑ह॒तः शृ॑ण्वि॒रे गि॒रा सु॒शुक्वा॑नः सु॒भ्व॑ एव॒याम॑रुत् ।

न येषा॒मिरी॑ स॒धस्थ॒ ईष्ट॒ आँ अ॒ग्नयो॒ न स्वविं॑द्युत॒ः प्र स्य॒न्द्रासो॒ धुनी॑नाम् ॥३

प्र । ये । दि॒वः । बृ॒ह॒तः । शृ॒ण्वि॒रे । गि॒रा । सु॒ऽशुक्वा॑नः । सु॒ऽभ्वः॑ । ए॒व॒याम॑रुत् ।

न । येषा॑म् । इरीं । स॒धऽस्थें । ईष्टें । आ । अ॒ग्नयः॑ । न । स्वऽविं॑द्युतः । प्र । स्य॒न्द्रासः॑ । धुनीं॑नाम् ॥३

प्र । ये । दिवः । बृहतः । शृण्विरे । गिरा । सुऽशुक्वानः । सुऽभ्वः । एवयामरुत् ।

न । येषाम् । इरी । सधऽस्थे । ईष्टे । आ । अग्नयः । न । स्वऽविद्युतः । प्र । स्यन्द्रासः । धुनीनाम् ॥३

“ये मरुतः "बृहतः महतः “दिवः द्युलोकादागच्छन्तः “प्र “शृण्विरे शृण्वन्ति तान् मरुतः “गिरा “एवयामरुत् स्तुतवान्। कीदृशास्ते । "शुशुक्वानः दीप्ताः "सुभ्वः सुष्ठु भवन्तः । "येषां मरुतां “सधस्थे सहस्थाने स्वकीये निवासे तिष्ठताम् “इरी ईरिता प्रेरित “न “ईष्टे “आ न ईशते च चालयितुम् । इति चार्थे। “अग्नयो "न अग्नय इव “स्वविद्युतः स्वयमेव विद्योतमानाः “धुनीनां नदीनां "स्पन्द्रासः वर्षणेन चालयितारश्च ॥

स च॑क्रमे म॒हतो निरु॑रुक्र॒मः स॑मा॒नस्मा॒त्सद॑स एव॒याम॑रुत् ।

य॒दायु॑क्त त्मना॒ स्वादधि॒ ष्णुभि॒र्विष्प॑र्धसो॒ विम॑हसो॒ जिगा॑ति॒ शेवृ॑धो॒ नृभिः॑ ॥४

सः । च॒क्र॒मे॒ । म॒ह॒तः । निः । उ॒रु॒ऽक्र॒मः । स॒मा॒नस्मा॑त् । सद॑सः । ए॒व॒याम॑रुत् ।

य॒दा । अयु॑क्त । त्मना॑ । स्वात् । अधि॑ । स्नुऽभिः॑ । विऽस्प॑र्धसः । विऽम॑हसः । जिगा॑ति । शेऽवृ॑धः । नृऽभिः॑ ॥४

सः । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् । सदसः । एवयामरुत् ।

यदा । अयुक्त । त्मना । स्वात् । अधि । स्नुऽभिः । विऽस्पर्धसः । विऽमहसः । जिगाति । शेऽवृधः । नृऽभिः ॥४

“सः मरुद्गणः "महतः प्रवृद्धात् "समानस्मात् सर्वेषां साधारणात् "सदसः स्थानात् अन्तरिक्षात् 'उरुक्रमः विस्तीर्णक्रमणः सन् "निः "चक्रमे निरगच्छत् । "एवयामरुत् ऋषिः "यदा "स्वात् स्वकीयस्थानात् । “अधि इति पञ्चम्यर्थानुवादी । “त्मना आत्मनैव "स्नुभिः गन्तृभिः "नृभिः स्वनेतृभिरश्वैः “अयुक्त युक्तोऽभवत् आगमनप्रार्थनाय । अथ बहुवदुच्यते । तदानीं "विस्पर्धसः विविधस्पर्धाः । अहं पुरतो गच्छाम्यहं पुरतो गच्छामीति तेषां स्पर्धा । अथवा विगतस्पर्धाः । न ह्येषां सार्धं स्पर्धकाः सन्ति । "विमहसः विशिष्टबलाः "शेवृधः शेवस्य सुखस्य वर्धयितारः "जिगाति निर्गच्छन्ति । व्यत्ययेन एकवचनम् ॥

स्व॒नो न वोऽम॑वान्रेजय॒द्वृषा॑ त्वे॒षो य॒यिस्त॑वि॒ष ए॑व॒याम॑रुत् ।

येना॒ सह॑न्त ऋ॒ञ्जत॒ स्वरो॑चिषः॒ स्थार॑श्मानो हिर॒ण्ययाः॑ स्वायु॒धास॑ इ॒ष्मिणः॑ ॥५

स्व॒नः । न । वः॒ । अम॑ऽवान् । रे॒ज॒य॒त् । वृषा॑ । त्वे॒षः । य॒यिः । त॒वि॒षः । ए॒व॒याम॑रुत् ।

येन॑ । सह॑न्तः । ऋ॒ञ्जत॑ । स्वऽरो॑चिषः । स्थाःऽर॑श्मानः । हि॒र॒ण्ययाः॑ । सु॒ऽआ॒यु॒धासः॑ । इ॒ष्मिणः॑ ॥५

स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः । तविषः । एवयामरुत् ।

येन । सहन्तः । ऋञ्जत । स्वऽरोचिषः । स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः । इष्मिणः ॥५

हे मरुतः "वः युष्माकं "स्वनः वेगजनितः शब्दः "न "रेजयत् न कम्पयत्वेवयामरुतं माम् ॥ ' सुपां सुलुक्' इति द्वितीयायाः लुक् ॥ स्वनो विशेष्यते । "अमवान् बलवान् "वृषा वर्षिता वृष्टेः "त्वेषः दीप्तः "ययिः गन्ता "तविषः प्रवृद्धः । "येन स्वनेन "सहन्तः शत्रूनभिभवन्तो यूयम् "ऋञ्जत प्रसाधयथ ॥ लडर्थे लोट् ॥ कीदृशा यूयम् । "स्वरोचिषः स्वायत्तरश्मयः "स्थारश्मानः स्थिररश्मयः । "हिरण्ययाः हिरण्याभरणाः "स्वायुधासः स्वायत्तायुधाः "इष्मिणः अन्नवन्तो गमनवन्तो वा ॥ ॥३३॥

अ॒पा॒रो वो॑ महि॒मा वृ॑द्धशवसस्त्वे॒षं शवो॑ऽवत्वेव॒याम॑रुत् ।

स्थाता॑रो॒ हि प्रसि॑तौ सं॒दृशि॒ स्थन॒ ते न॑ उरुष्यता नि॒दः शु॑शु॒क्वांसो॒ नाग्नयः॑ ॥६

अ॒पा॒रः । व॒ः । म॒हि॒मा । वृ॒द्ध॒ऽश॒व॒स॒ः । त्वे॒षम् । शवः॑ । अ॒व॒तु॒ । ए॒व॒याम॑रुत् ।

स्थाता॑रः । हि । प्रऽसि॑तौ । स॒म्ऽदृशि॑ । स्थन॑ । ते । न॒ः । उ॒रु॒ष्य॒त॒ । नि॒दः । शु॒शु॒क्वांसः॑ । न । अ॒ग्नयः॑ ॥६

अपारः । वः । महिमा । वृद्धऽशवसः । त्वेषम् । शवः । अवतु । एवयामरुत् ।

स्थातारः । हि । प्रऽसितौ । सम्ऽदृशि । स्थन । ते । नः । उरुष्यत । निदः । शुशुक्वांसः । न । अग्नयः ॥६

हे मरुतः "वः युष्माकं "महिमा "अपारः अनवधिकः । हे "वृद्धशवसः प्रवृद्धबलाः "त्वेषं दीप्तं "शवः युष्माकं बलम् "अवतु रक्षतु एवयामरुतं माम् ॥ द्वितीयैकवचनस्य लुक् ॥ यूयं "प्रसितौ प्रबलबन्धने नियमनवति यज्ञे "संदृशि संदर्शने निमित्ते "स्थातारो "हि स्थाननियमेन तिष्ठन्तो भवथ खलु। "ते "नः अस्मान् "निदः निन्दकात् शत्रोः सकाशात् "उरुष्यत रक्षत । "अग्नयः इव "शशुक्वांसः यूयमिति ॥

ते रु॒द्रास॒ः सुम॑खा अ॒ग्नयो॑ यथा तुविद्यु॒म्ना अ॑वन्त्वेव॒याम॑रुत् ।

दी॒र्घं पृथु प॑प्रथे॒ सद्म॒ पार्थि॑वं॒ येषा॒मज्मे॒ष्वा म॒हः शर्धां॒स्यद्भु॑तैनसाम् ॥७

ते । रु॒द्रासः॑ । सुऽम॑खाः । अ॒ग्नयः॑ । य॒था॒ । तु॒वि॒ऽद्यु॒म्नाः । अ॒व॒न्तु॒ । ए॒व॒याम॑रुत् ।

दी॒र्घम् । पृ॒थु । प॒प्र॒थे॒ । सद्म॑ । पार्थि॑वम् । येषा॑म् । अज्मे॑षु । आ । म॒हः । शर्धां॑सि । अद्भु॑तऽएनसाम् ॥७

ते । रुद्रासः । सुऽमखाः । अग्नयः । यथा । तुविऽद्युम्नाः । अवन्तु । एवयामरुत् ।

दीर्घम् । पृथु । पप्रथे । सद्म । पार्थिवम् । येषाम् । अज्मेषु । आ । महः । शर्धांसि । अद्भुतऽएनसाम् ॥७

“ते मरुतः "रुद्रासः रुद्रपुत्राः "सुमखाः शोभनयज्ञाः "अग्नयो "यथा अग्नय इव "तुविद्युम्नाः प्रभूतदीप्तयः । अथवा अग्निसदृशास्तुविद्युम्नाः प्रभूतधनाः "अवन्तु रक्षन्तु "एवयामरुत् एतन्नामानमृषिं माम् । "पार्थिवम् । पृथिव्यत्रान्तरिक्षम् । तत्संबन्धि “दीर्घम् आयतं "पृथु विस्तीर्णं "सद्म सदनं “पप्रथे मरुद्भिः प्रथितमभूत् । "अद्भुतैनसाम् अपापानां "येषाम् "अज्मेषु गमनेषु "महः महान्ति “शर्धांसि च “आ गच्छन्तीति शेषः ॥

अ॒द्वे॒षो नो॑ मरुतो गा॒तुमेत॑न॒ श्रोता॑ हवं॑ जरि॒तुरे॑व॒याम॑रुत् ।

विष्णो॑र्म॒हः स॑मन्यवो युयोतन॒ स्मद्र॒थ्यो॒३॑ न द॒ंसनाप॒ द्वेषांसि सनु॒तः ॥८

अ॒द्वे॒षः । न॒ः । म॒रु॒त॒ः । गा॒तुम् । आ । इ॒त॒न॒ । श्रोत॑ । हव॑म् । ज॒रि॒तुः । ए॒व॒याम॑रुत् ।

विष्णो॑ः । म॒हः । स॒ऽम॒न्य॒व॒ः । यु॒यो॒त॒न॒ । स्मत् । र॒थ्य॑ः । न । द॒ंसना॑ । अप॑ । द्वेषांसि । स॒नु॒तरिति॑ ॥८

अद्वेषः । नः । मरुतः । गातुम् । आ । इतन । श्रोत । हवम् । जरितुः । एवयामरुत् ।

विष्णोः । महः । सऽमन्यवः । युयोतन । स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति ॥८

हे "मरुतः "अद्वेषः अद्वेषसो यूयं "नः अस्माकं "गातुं गमनस्वभावं स्तोत्रं प्रति "एतन आगच्छत । तदर्थं "जरितुः स्तोतुः “एवयामरुत् एवयामरुतो मम “हवं “श्रोत शृणुत । “विष्णोः व्यापकस्येन्द्रस्य "महः महतः हे "समन्यवः समानयज्ञा यूयं "स्मत् । अयं प्रशस्तनाम । प्रशस्ताः “रथ्यो “न रथिनो योद्धार इव । ते यथा शत्रूनपाकुर्वन्ति तद्वदस्माकं “दंसना कर्मणा “सनुतः । अन्तर्हितनामैतत् । अन्तर्हितान् द्वेषांसि द्वेष्टॄन् "अप "युयोतन दूरे वियोजयत पृथकुरुत ॥

गन्ता॑ नो य॒ज्ञं य॑ज्ञियाः सु॒शमि॒ श्रोता॑ हव॑मर॒क्ष ए॑व॒याम॑रुत् ।

ज्येष्ठा॑सो॒ न पर्व॑तासो॒ व्यो॑मनि यू॒यं तस्य॑ प्रचेतस॒ः स्यात॑ दु॒र्धर्त॑वो नि॒दः ॥९

गन्त॑ । न॒ः । य॒ज्ञम् । य॒ज्ञि॒या॒ः । सु॒ऽशमि॑ । श्रोत॑ । हव॑म् । अ॒र॒क्षः । ए॒व॒याम॑रुत् ।

ज्येष्ठा॑सः । न । पर्व॑तासः । विऽओ॑मनि । यू॒यम् । तस्य॑ । प्र॒ऽचे॒त॒स॒ः । स्यात॑ । दु॒ःऽधर्त॑वः । नि॒दः ॥९

गन्त । नः । यज्ञम् । यज्ञियाः । सुऽशमि । श्रोत । हवम् । अरक्षः । एवयामरुत् ।

ज्येष्ठासः । न । पर्वतासः । विऽओमनि । यूयम् । तस्य । प्रऽचेतसः । स्यात । दुःऽधर्तवः । निदः ॥९

हे "यज्ञियाः मरुतः यूयं "नः अस्माकं "यज्ञं “गन्त आगच्छत । "सुशमि शोभनकर्म यथा भवति तथा । सुकर्मत्वायेत्यर्थः । तदर्थं नः “हवम् अस्मदीयमाह्वानं “श्रोत शृणुत । "अरक्षः रक्षोवर्जिता यूयम् । लिङ्गवचनयोर्व्यत्ययः ॥ “ज्येष्ठासो “न ज्येष्ठा इव “पर्वतासः विन्ध्यादय इवातिप्रवृद्धाः “व्योमनि अन्तरिक्षे वर्तमानाः "प्रचेतसः "यूयं "तस्य निदः निन्दकस्य “दुर्धर्तवः दुर्धराः “स्यात भवत ।। ।। ३४ ॥

---

**टिप्पणी**

पृष्ठ्यषडहयागस्य षष्ठे अहनि तृतीयसवने अच्छावाक ऋत्विक् एवयामरुतसंज्ञकस्य शिल्पस्य शंसनं करोति।

एवयामरुतः (https://sa.wikisource.org/s/29fg)

